श्रीः ।

# दीक्षाप्रकाशिका ।

विद्वद्वर्यश्रीविष्णुभट्टेन विरचिता

अष्टाङ्गसिद्धिपंचाङ्ग—कुलाकुलादिचक्रैश्च सहिता

सूर्यपुर(सुरत)स्थ ज्योतिर्विद्

कृष्णशंकर केशवराम रैक इत्येतैः सम्पाद्य

संशोधिता.

---

मुंबय्यां

पाण्डुरङ्ग जावजी इत्येतैः

स्वीये "निर्णयसागरमुद्रणालयें" मुद्रयित्वा

प्रकाशिता ।

प्रतयः १०००.

शकाब्दाः १८५७, सन १९३५.

---

मूल्यं [illegible] आणकाः

# प्रस्तावना ।

विदितमस्त्याबालमापण्डितमेतद्यद् द्विजातीनां निजनिजाचारपरिपालनपरायणानां निःश्रेयसाय परमकारुणिका मन्वादयो महर्षिप्रवराः श्रुतिस्मृतिपुराणादिमहोदधिं निर्मथ्य परमश्रेयःसाधनं प्रधानं धर्मं निर्णीय विविधान् धर्मनिबन्धान् व्यरीरचन् । तत्र च धर्ममार्गमपि वैदिक—तान्त्रिकभेदेन द्विधा प्रतिपादितवन्तः । स चोभयविधोऽपि न सकलजनैः साधारण्येन सेवितुमर्हः, किन्तु तत्तदधिकारिभिरेव स समादरणीय इति नात्र शङ्कालेशावकाशः । वैदिकधर्मश्च तत्तद्वेदशाखाप्रशाखाप्रवर्तकैर्महर्षिमुख्यैः कल्पसूत्रकारादिभिश्च तत्तदधिकारिजनसौकर्यार्थं सुस्पष्टतया प्रपञ्चितः । एवं तान्त्रिकोऽपि धर्मश्चतुःषष्टितन्त्रेषु सविस्तरं प्रपञ्चितोऽपि साम्प्रतं विरलप्रचारो दृश्यते । तन्त्रग्रंथानामतिगहनत्वमाकलय्य बहवः स्वल्पा महान्तश्च ग्रन्थास्तन्त्रग्रंथेभ्यः सारं समुद्धृत्य पण्डिताखण्डलैर्विरचिता विराजंते, परञ्च तत्तद्ग्रंथावलोकनमात्रेण तत्तन्मंत्राराधनं न श्रेयस्करम् । प्रत्युत तत्साधकस्य महदनिष्टजनकम्, अतस्तच्छ्रीमद्देशिकगुरुचरणकमलसपर्यामन्तरा न समाराधनार्हमिति, श्रूयते च ॥

मन्त्रं वा देवं वा गुरुपदमनादृत्य भजतां ।
समीचीना सिद्धिर्नहि भवति पूर्वांगविरहात् ॥ इति ॥

तदेतत्सकलं समालोच्य तन्त्रशास्त्रे दीक्षाग्रहणस्यावश्यकत्वं प्रतिपादितम् । दीक्षाशब्दार्थोऽपि तत्र प्रदर्शितः ।

दिव्यभावप्रदानाच्च स्खलनात्कलुषस्य च ।
दीक्षेति कथिता सद्भिर्भवबन्धनमोक्षणादिति"
ददाति शिवतादात्म्यं क्षिणोति च मलत्रयम् ।
अतो दीक्षेति सा प्रोक्ता दीक्षाशब्दार्थवेदिभिः"

इत्यादि विस्तरतः प्रपंचितं कामकलाविलासस्य "बीजत्रितयाधिपतीन् परीक्ष्य विद्यां प्रकाशयामास। एतैरोघत्रितयं समनुगृहीत गुरुक्रमो विदितः ॥ ५३ ॥ इत्येतस्य चिद्वल्ल्याम्।

नहीदं दीक्षाविधानं केवलं तान्त्रिकधर्ममार्गे वर्तते किंतु वैदिकधर्ममार्गेऽपि दीक्षाविधानं जैमिनिसूत्रे अध्याय ६ पा. ५ अधिकरणेषु ८—१२ विस्तरेण प्रतिपादितं दृश्यते सा च दीक्षा कतिभेदवती, कदा कार्या, कश्च तद्ग्रहणप्रकारः, कीदृशो गुरुः, कीदृक्षश्च शिष्यः, इत्यादि सर्वं विचार्य तत्रभवद्भिर्विद्वद्वर्यैः श्रीविष्णुभट्टैर्विरचिता दीक्षाप्रकाशिका द्वादशप्रकाशा विराजते, तां च मत्संग्रहपुस्तकेषु विलोक्येयं सकलविद्वज्जनमनोमोदप्रदायिनीति विचार्य यथामति पुस्तकांतरमन्तरा एकेनैव पुस्तकेन संशोध्य विविधविषयपरिपूर्णाप्रसिद्धप्राचीनार्वाचीनपुस्तकमुद्रणकार्यपरायणाय विविधविद्याविद्योतितमानसाय निर्णयसागरमुद्रालयाधिपतये श्रीयुत **पांडुरंग जावजी** महोदयाय मुद्रापयित्वा प्राकाश्यार्थमददाम्, श्रीमता निर्णयसागरयंत्रालयाधिपतिना यथावकाशं संमुद्र्येयं सदयहृदयानां मनोहारिणी शीघ्रं भविष्यतीति विचार्य प्रकाशिता वर्तते। ग्रंथकर्ता विद्वद्वर्यश्रीविष्णुभट्टः कं वा जनपदं स्वजन्मना विभूषयतिस्मेति किमपि वृत्तं न ज्ञायते ग्रंथादौ ग्रंथांते च न पितृचरणाभिधानमपि निर्दिष्टम्। केवलं समाप्तिसमयमेव लिखितवान् 'गच्छतः स्खलनंकापी'तिन्यायेन मनसश्चंचलत्वादत्र यत्किंचिदशुद्धं विदुषां दृष्टिपथमागच्छेत्तत्सर्वं मदीयमिति मत्वा क्षंतव्यः संबोधनीयश्चाहं, अथवा येषां महानुभावानां सविधे दीक्षाप्रकाशिकापुस्तकं चेद्दयालुभिश्च कृपया, तद्दीयेत तर्हि द्वितीयावृत्तौ तदशुद्धं दूरीकरिष्यामीति सप्रणामं प्रार्थयते।

ज्योतिषी कृष्णशंकर केशवराम रैक्वः।

# अथ दीक्षाप्रकाशिकायां प्रमाणत्वेनांगीकृतानां ग्रंथानां सूचीपत्रम् ।

१ मंथानभैरवतंत्रम्
२ तंत्रसारः
३ योगिनीहृदयम्
४ पुरश्चरणपद्धतिः
५ सिद्धांतावरः
६ गरुडतंत्रम्
७ आगम कल्पद्रुमः
८ रामार्चनचंद्रिका
( सनत्कुमारः )
९ विश्वसारः
१० योगिनीतंत्रम्
( यामलम् )
११ विष्णुयामलम्
१२ समयातंत्रम्
१३ कुलार्णवः
१४ मत्स्यसूक्तम्
१५ वाराहीतंत्रम्
१६ मुहूर्तकल्पद्रुमः
१७ त्रिशक्तिरत्नम्
( कादिमते )
१८ सारसंग्रहः
१९ गणेशविमर्शिणी
२० शक्तियामलम्
२१ सूतसंहिता
२२ सिद्धयामलम्
२३ रुद्रयामलम्
२४ शारदातिलकम्
२५ गौतमीतंत्रम्
२६ कुलामृतम्
२७ डामरतंत्रम्
२८ दक्षिणामूर्तिसंहिता
२९ पंचमीश्वरीतंत्रम्
३० महाकपिंजलपंचरात्रम्
३१ सौभाग्यरत्नाकरः
३२ नारदीयपुराणम्
३३ मंत्रसंग्रहः
३४ स्वतंत्रतंत्रम्
३५ नीलतंत्रम्
३६ तंत्रराजः
३७ कुलसारः
३८ श्रीकुलप्रकाशतंत्रम्
३९ गुहकल्पः
४० नारदपंचरात्रम्
४१ शैवागमः
( पिंगालामते )
( निबंधे )
४२ ताराभक्तिसुधार्णवः
४३ पद्मपुराणम्
४४ भविष्यपुराणम्

# विषयानुक्रमणिका.



अथ

# दीक्षाप्रकाशिका।

## दीक्षामुहूर्तप्रकाशः ॥ १ ॥

॥ श्रीगणेशाय नमः ॥ श्रीगुरुभ्यो नमः ॥ श्रीपरदेवतायै नमः ॥

नत्वा कृष्णपदद्वंद्वं ब्रह्मादिदेवपूजितम् ।
सत्यानंदांघ्रिद्वंद्वं च विष्णुभट्टेन धीमता ॥ १ ॥
सौभाग्यदीपिके चैव तंत्रसारं च शारदाम् ।
कुलार्णवं तंत्रराजं ताराभक्तिसुधार्णवम् ॥ २ ॥
एतान्यन्यानि तंत्राणि ज्ञात्वा गुरुप्रसादतः ।
दीक्षाप्रकाशिकाग्रंथः क्रियते सर्वसिद्धिदः ॥ ३ ॥

अत्र सौभाग्यशब्देन सौभाग्यरत्नाकरः । दीपिकाशब्देन शिवार्चनदीपिका ॥

अथ दीक्षा—

तत्र शिष्याय दिव्यज्ञानं ददाति सर्वपापक्षयं च करोतीति दीक्षाशब्दनिरुक्तिः । सा तु सप्तभेदा भवति । क्रियामयी १ वर्णमयी २ कलामयी ३ स्पर्शमयी ४ दृग्दीक्षा ५ वाग्दीक्षा ६ वेददीक्षा ७ चेति ॥

---

१ दिव्यभावप्रदानाच्च स्खलनात्कलुषस्य च । दीक्षेति कथिता सद्भिः भवबंधनमोक्षणात् ॥ १ ॥

तत्रादौ क्रियादीक्षाविधिर्विविच्यते ।

तत्र शुभे मासि शुक्लपक्षे शुभतिथौ यथोक्तलक्षणयुक्तं गुरुं यथोक्तलक्षणयुक्तः शिष्यो यथाविधि सेवादिभिः प्रसाद्य यथाविधि वरणं कृत्वा तत्सकाशाद्दीक्षां गृह्णीयात् ॥

अथादौ दीक्षाकालः मंथानभैरवतंत्रे तंत्रसारे—

मंत्रारंभस्तु चैत्रे स्यात्समस्तपुरुषार्थदः ।
वैशाखे रत्नलाभः स्याज्ज्येष्ठे च मरणं भवेत् ॥ १ ॥
आषाढे बंधुनाशः स्यात्पूर्णार्थः श्रावणे भवेत् ।
प्रजानाशो भवेद्भाद्रे आश्विने धनसंचयः ॥ २ ॥
कार्तिके मंत्रसिद्धिः स्यान्मार्गशीर्षे तथा भवेत् ।
पौषे तु शत्रुपीडा स्यान्माघे मेधाविवर्धनम् ॥ ३ ॥
फाल्गुने सर्वकामाः स्युर्मलमासं विवर्जयेत् ।

"चैत्रे तु गोपालविषयं" गौतम्युक्तत्वात् ।
"मधुमासे भवेद्दीक्षा दुःखाये"त्यादिवचनान्नान्यत्र ॥
"आषाढे निषेधोऽपि" श्रीविद्यातिरिक्तविषय एव ।

तथाच योगिनीहृदये—

ज्येष्ठे मृत्युप्रदा चैव आषाढे धनसंपदः । इति ।

पुरश्चरणपद्धतावपि—

वैशाखे श्रावणे वापि आश्विने कार्तिके तथा ।
फाल्गुने मार्गशीर्षे वा कुर्यान्मांत्रीयदीक्षणम् ॥ १ ॥

सिद्धांतान्तरेपि—

शरत्काले च वैशाखे दीक्षा श्रेष्ठफलप्रदा ।
फाल्गुने मार्गशीर्षे च ज्येष्ठे दीक्षा च मध्यमा ॥ २ ॥

आषाढे श्रावणे माघे कनिष्ठा सद्भिरादृता ।
निंदितश्चैत्रमासस्तु पौषो भाद्रपदस्तथा ॥ ३ ॥

अथ वारास्तत्रैव—

रविवारे भवेद्वित्तं सोमे शांतिर्भवेत्किल ।
आयुरंगारके हंति तत्र दीक्षां विवर्जयेत् ॥ १ ॥
बुधे सौंदर्यमाप्नोति ज्ञानं स्याच्च बृहस्पतौ ।
शुक्रे सौभाग्यमाप्नोति यशोहानिः शनैश्चरे ॥ २ ॥

उक्तंच गरुडतंत्रे—

गुरुवारे सुखं विद्याच्छुक्रेश्चार्कः प्रशस्यते ।
शैवे तु गुरुवारः स्यात्सौरे चंद्रः प्रशस्यते ॥
बुधे तु सकला दीक्षा मरणं शनिभौमके ।

पुरश्चरणपद्धतौ—

रवौ गुरौ विधौ दीक्षा कर्तव्या बुधशुक्रयोः ॥
मंत्रारंभो रवौ शुक्रे बुधे जीवे विशेषतः ।
शनौ मृत्युः क्षयो भौमे सोमे सर्वं च निष्फलम् ॥
इति वचनात् सोमस्य मध्यमत्वम् ॥

अथ तिथिनिर्णयः आगमकल्पद्रुमे—

प्रतिपत्सु कृता दीक्षा ज्ञाननाशकरी मता ।
द्वितीयायां भवेज्ज्ञानं तृतीयायां शुचिर्भवेत् ॥ १ ॥
चतुर्थ्यां धननाशः स्यात्पंचम्यां बुद्धिवर्धनम् ।
षष्ठ्यां ज्ञानक्षयः सौख्यं लभते सप्तमीदिने ॥ २ ॥
अष्टम्यां बुद्धिनाशः स्यान्नवम्यां वपुषः क्षयः ।
दशम्यां राजसौभाग्यमेकादश्यां शुचिर्भवेत् ॥ ३ ॥

द्वादश्यां सर्वसिद्धिः स्यात्त्रयोदश्यां दरिद्रता।
तिर्यग्योनिश्चतुर्दश्यां कृमिर्मासावसानके॥ ४॥
पक्षांते सर्ववृद्धिः स्यादस्वाध्यायं विवर्ज्जयेत्।
संध्यागर्जितनिर्घोषभूकंपोल्कानिपातनम्॥ ५॥
एतानन्यांश्च दिवसान् श्रुत्युक्तान्परिवर्जयेत्।
द्वादश्यामपि कर्तव्यं त्रयोदश्यामथापि वा॥ ६॥

त्रयोदशीद्वादशीविधानं विष्णुविषयम्। रामार्चनचंद्रिकाधृतत्वात्। "त्रयोदशी च दशमी प्रशस्ता सर्वकामदेति" सनत्कुमारवचनात्॥

पुरश्चरणपद्धतौ—

पूर्णिमा पंचमी चैव द्वितीया सप्तमी तथा।
त्रयोदशी च दशमी प्रशस्ताः सर्वकामदाः॥ १॥
द्वितीया पंचमी वापि षष्ठी चापि विशेषतः।
द्वादश्यामपि कर्तव्यं त्रयोदश्यामथापि वा॥ २॥

कुत्रचिन्निषिद्धत्वात्षष्ठीत्रयोदश्योर्मध्यमत्वम्॥

अथ नक्षत्रनिर्णयः तत्रैव—

अश्विन्यां सुखमाप्नोति भरण्यां मरणं ध्रुवम्।
कृत्तिकायां भवेद्दुःखी रोहिण्यां वाक्पतिर्भवेत्॥ १॥
मृगशीर्षे सुखावाप्तिरार्द्रायां बंधुनाशनम्।
पुनर्वसौ धनाढ्यः स्यात्पुष्ये शत्रुविनाशनम्॥ २॥
आश्लेषायां भवेन्मृत्युर्मघायां दुःखमोचनम्।
सौंदर्यं पूर्वफल्गुन्यां संप्राप्नोति न संशयः॥ ३॥
ज्ञानं चोत्तरफल्गुन्यां हस्ते चैव धनी भवेत्।
चित्रायां ज्ञानसिद्धिः स्यात्स्वात्यां शत्रुविनाशनम्॥ ४॥

विशाखायां सुखं चानुराधायां बंधुवर्धनम् ।
ज्येष्ठायां सुतहानिः स्यान्मूले कीर्तिविवर्धनम् ॥ ५ ॥
पूर्वाषाढोत्तराषाढे भवेतां कीर्तिदायिके ।
श्रवणे च भवेद् दुःखी धनिष्ठायां दरिद्रता ॥ ६ ॥
बुद्धिः शतभिषायां स्यात्पूर्वभाद्रे सुखी भवेत् ।
सौख्यं तूत्तरभाद्रे च रेवत्यां कीर्तिवर्धनम् ॥ ७ ॥

पुरश्चरणपद्धतौ—

अश्विनीरोहिणीस्वातीविशाखाहस्तभेषु च ।
ज्येष्ठोत्तरात्रयेष्वेव कुर्यान्मन्त्राभिषेचनम् ॥ १ ॥
श्रवणार्द्रा धनिष्ठा च पुष्यः शतभिषक्तथा ।
दीक्षानक्षत्रजातानि प्राहुस्तंत्रार्थकोविदाः ॥ २ ॥

अथ योगादिनिर्णयः विश्वसारे—

शुभः सिद्धिश्च आयुष्मान् ध्रुवयोगस्ततः परम् ।
प्रीतिः सौभाग्ययोगश्च वृद्धियोगस्ततः परम् ॥ १ ॥
हर्षणश्च तथा योगाः सर्वतंत्रे शुभावहाः ।

अथ करणनिर्णयः—

कौलवस्तैतिलबवौ वणिजस्तदनंतरम् ।
करणानि शुभान्येव सर्वतंत्रेषु भामिनि ॥ १ ॥

अथ लग्ननिर्णयः—

वृषे सिंहे च कन्यायां धनमीनाख्यलग्नके ।
चंद्रतारानुकूल्ये च कुर्याद्दीक्षाप्रवर्तनम् ॥ १ ॥
स्थिरलग्नं विष्णुमंत्रे शिवमंत्रे चरं शुभम् ।
द्विस्वभावगतं लग्नं शक्तिमंत्रे प्रशस्यते ॥ २ ॥

अथ पक्षनियमः—

शुक्लपक्षे शुभा दीक्षा कृष्णेऽप्यापंचमीदिनात्।
निषिद्धमासे तु तत्तद्विशेषो दिनभेदतः॥ १॥

अथोक्तमासपक्षादिशोधनमंतरेणापि सर्वेषां दीक्षायाः शुभकालविशेषः—

विषुवेऽप्ययनद्वंद्वे संक्रांतौ दमनोत्सवे।
दीक्षा कार्या त्वकालेऽपि पवित्रे गुरुपर्वणि॥ १॥

आगमकल्पद्रुमेऽपि—

षष्ठी भाद्रपदे मासि इषे कृष्णा चतुर्दशी।
कार्तिके नवमी शुक्ला मार्गे शुक्लतृतीयका॥ १॥
पौषे च नवमी शुक्ला माघे शुक्लचतुर्थिका।
फाल्गुने नवमी शुक्ला चैत्रे कामचतुर्दशी॥ २॥
वैशाखे चाक्षया चैव ज्येष्ठे दशहरा तिथिः।
आषाढे पंचमी शुक्ला श्रावणे कृष्णपंचमी॥ ३॥
एतानि देवपर्वाणि तीर्थकोटिफलं लभेत्।

अन्यच्च—

चैत्रे त्रयोदशी शुक्ला वैशाखैकादशी सिता।
ज्येष्ठे चतुर्दशी कृष्णा आषाढे नागपंचमी॥ १॥
श्रावणैकादशी भाद्रे रोहिणीसंयुताष्टमी।
आश्विने तु महापुण्या महाष्टम्यप्यभीष्टदा॥ २॥
कार्तिके नवमी शुक्ला मार्गशीर्षे तथा सिता।
षष्ठी चतुर्दशी पौषे माघेप्येकादशी सिता॥ ३॥
फाल्गुने च सिता षष्ठीत्येवंकालस्य निर्णयः।

योगिनीतंत्रे

अयने विषुवे चैव ग्रहणे चंद्रसूर्ययोः।
रविसंक्रांतिदिवसे युगाद्यायां सुरेश्वरि ॥ १ ॥
मन्वंतरासु सर्वासु महापूजादिने तथा।
चतुर्थी पंचमी चैव चतुर्दश्यष्टमी तथा ॥ २ ॥

तिथयः शुभदाः प्रोक्ता इत्यादिवचनात् ॥ तत्र चतुर्थीग्रहणं गणेशविषयम्। चतुर्दश्यष्टमीग्रहणं शक्तिविषयं तत्तत्कल्पोक्तत्वात् ॥

निंद्यादिष्वपि कालेषु दीक्षोक्ता ग्रहणे शुभा ॥
सूर्यग्रहणकालेन समानो नास्ति भूतले।
तत्र यद्यत्कृतं सर्वमनंतफलदं भवेत् ॥ १ ॥
रविसंक्रमणे चैव सूर्यस्य ग्रहणे तथा।
तत्र लग्नादिकं किंचिन्न विचार्यं कथंचन ॥ २ ॥
रविसंक्रमणे चैव नान्यदन्वेषितं भवेत्।
न वारतिथिमासादिशोधनं सूर्यपर्वणि ॥ ३ ॥
एवं चंद्रग्रहणेऽपि।

तद्यथा—

सत्तीर्थेऽर्कविधुग्रासे पुण्यारण्ये वनेषु च।
मंत्री दीक्षां प्रकुर्वाणो मासर्क्षादीन्न शोधयेत् ॥ १ ॥

तथा—

अमावास्या सोमवारे भौमवारे चतुर्दशी।
सप्तमी रविवारे च सूर्यपर्वशतैः समाः ॥ १ ॥

यामले—

न कुर्याच्छाक्तिकीं दीक्षामुपरागे विभावसोः।
न कुर्याद्वैष्णवीं दीक्षां यदि चंद्रमसो ग्रहः॥ १॥
पुण्यतीर्थे कुरुक्षेत्रे देवीपीठचतुष्टये।
प्रयागे श्रीगिरौ काश्यां कालाकालं न शोधयेत्॥ २॥

विष्णुयामले—

देवीबोधं समारभ्य यावत्स्यान्नवमी तिथिः।
कृता तासु बुधैर्दीक्षा सर्वाभीष्टफलप्रदा॥ १॥

तथा—

बोधने चैव दीक्षायाः कालाकालं न शोधयेत्।
अशोकाख्याष्टमी चैव रामाख्या नवमी तथा॥ २॥
लग्ने वाप्यथवाऽलग्ने यत्र तत्र तिथावपि।
गुरोराज्ञानुरूपेण दीक्षा कार्या विशेषतः॥ ३॥

समयातंत्रे—

शिष्यानाहूय गुरुणा कृपया दीयते यदा।
तदा लग्नादिकं किंचिन्न विचार्यं कथंचन॥ १॥
सर्वे वारा ग्रहाः सर्वे नक्षत्राणि च राशयः।
यस्मिन्नहनि संतुष्टो गुरुः सर्वे शुभावहाः॥ २॥

अन्यत्रापि—

संतुष्टे च गुरौ तस्य संतुष्टाः सर्वदेवताः।
गुरुं संतोषयेद्भक्त्या द्वयमेव तथा भवेत्॥ १॥
"द्वयं भुक्तिमुक्ती" मुमुक्षूणां सदा कालः स्त्रीणां कालस्तु सर्वदेति।

कुलार्णवेऽपि—

विधवायाः सुतादेशात्कन्यायाः पितुराज्ञया।
नाधिकारः स्वतो नार्या भार्याया भर्तुराज्ञया॥ १॥

अथ लग्नशुद्धिः—

त्रिषडायगताः पापाः शुभाः केंद्रत्रिकोणगाः।
दीक्षायां तु शुभाः सर्वे रंध्रस्थाः सर्वनाशकाः॥ १॥

योगिनीतंत्रे—

ग्रहणे च महातीर्थे नास्ति कालस्य निर्णयः।

तथा—

गयायां भास्करक्षेत्रे विरजे चंद्रपर्वते।
चत्वरे च मतंगे च तथा कन्याश्रमेषु च॥ १॥
न गृह्णीयात्ततो दीक्षां तीर्थेष्वेतेषु पार्वति।

अथ दीक्षाग्रहणस्थानं मत्स्यसूक्ते—

गोष्ठे शिवालये शून्ये श्मशाने वा नदीतटे।
मंत्रस्य ग्रहणं कृत्वा पूजयेत्सिद्धिमीप्सुभिः॥ १॥

वाराहीतंत्रे—

शुक्रास्तो यदि वावृद्धो गुर्वादित्यो भवेद्यदि।
मेषवृश्चिकसिंहेषु तदा दोषो न विद्यते॥ १॥

मुहूर्तकल्पद्रुमेऽपि—

दीक्षाविधानं शुभकारि राधे माघद्वये चाश्विनतस्त्रयेऽपि।
पक्षे सिते कृष्णदलांत्यभागो मलिम्लुचो भूतनयश्च हेयः॥१॥
तिथ्यः प्रशस्ताः सकला विशेषाच्छ्रियो द्वितीयाथ रथांगपाणेः।
स्याद्द्वादशी भूतदिनं शिवस्य सरस्वतीमंत्रविधौ तु कामः॥२॥

चतुर्दशी चाष्टमिका तृतीया कात्यायनीमंत्रविधौ प्रणीता ।
रवी रवेः स्याद्गणनायकस्य चतुर्थिका मंत्रविधौ प्रशस्ता ॥३॥
लघुध्रुवादित्यमघानुराधाश्रवोऽस्त्रपांत्यैंदवमानिलं सत् ।
पापास्त्रिषष्ठायगताः शुभाः स्युः सौम्यास्त्रिकेंद्रद्विशरांकयाताः
रंध्रे विशुद्धे चरभे तु शैवः स्थिरे हरेर्द्विप्रकृतौ शिवायाः ।
मंत्रः शुभो नीचगते गुरौ वा शुक्रेपि बाले जरठेऽस्तगे न ५
संक्रांतिवारे ग्रहणे रवींद्वोर्नभःसिते भूतदिने प्रयागे ।
श्रीपर्वते वाप्यविमुक्तकेऽपि देव्याः प्रपीठेषु न कालशुद्धिः ६

त्रिशक्तिरत्नेऽपि—

इषे वा कार्तिके मासि रोहिण्यां श्रवणेऽथवा ।
रेवत्यां चानुराधायां धनिष्ठापुष्ययोस्तथा ॥ १ ॥
आर्द्रायामुत्तरायां च दीक्षां कुर्यादतंद्रितः ।
तदलाभे तु कृष्णायामष्टम्यां शुभवासरे ॥ २ ॥
महाष्टमी विशेषेण दुर्लभा मंत्रकर्मणि ।
विचारयेन्न तस्यां हि कालशुद्धिं विचक्षणः ॥ ३ ॥
गोष्ठे शैवालये वापि श्मशाने तटिनीतटे इति ।

अत्र निषिद्धदिनानि ज्योतिःशास्त्राद्विशेषतो ज्ञेयानि तान्यत्र न लिखितानि ग्रंथगौरवभयात् एवं विचार्य निर्दोषे दिवसे शुभलग्ने दीक्षां कुर्यात् ।

इति श्रीसत्यानंदनाथगुरुचरणप्रसादेन श्रीविष्णुभट्टविरचितायां दीक्षाप्रकाशिकायां दीक्षामुहूर्तकथनं नाम प्रथमः प्रकाशः ॥ ॥

## गुरुशिष्यलक्षणप्रकाशः ॥ २ ॥

### अथ गुरुलक्षणानि ।

तत्र कादिमते—

सुंदरः सुमुखः स्वच्छः सुभगो वहुतंत्रवित् ।
असंशयः संशयच्छिन्निरपेक्षो गुरुर्मतः ॥ १ ॥
सौंदर्यमनवद्यत्वं रूपे सुमुखता पुनः ॥
स्मेरपूर्वाभिभाषित्वं स्वच्छताऽजिह्मवृत्तिता ॥ २ ॥
सौलभ्यमप्यगर्वित्वं संतोषो वहुतंत्रता ।
असंशयस्तत्त्ववोधे तच्छक्तिप्रतिपादनात् ॥ ३ ॥
नैरपेक्ष्यमवित्तेच्छा गुरुत्वं हितवेदिता ।
एवंविधो गुरुर्ज्ञेयस्त्वितरः शिष्यदुःखदः ॥ ४ ॥

तथा कुलार्णवेऽपि—

श्रीगुरुः परमेशानि शुद्धवेषो मनोहरः ।
सर्वलक्षणसंयुक्तः सर्वावयवशोभितः ॥ १ ॥
सर्वागमार्थतत्त्वज्ञः सर्वमंत्रविधानवित् ।
लोकसंमोहनाकारो देववत्प्रियदर्शनः ॥ २ ॥
सुमुखः सुलभः स्वच्छः शुद्धांतश्छिन्नसंशयः ।
इंगिताकारचेष्टाविदूरतः कृतदुर्जनः ॥ ३ ॥
अंतर्मुखो बहिर्दृष्टिः सर्वज्ञो देशकालवित् ।
आज्ञासिद्धस्त्रिकालज्ञो निग्रहानुग्रहक्षमः ॥ ४ ॥

---

१ गुशब्दस्त्वंधकारे स्याद्रुशब्दस्तन्निरोधकः । अंधकारनिरोधत्वाद्गुरुरित्यभिधीयते । गुह्यागमात्मतत्त्वांधनद्धानां बोधनादपि । रुद्रादिदेवतारूपाद् गुरुरित्यभिधीयते ॥ २ ॥

वेदवेदांगविच्छांतः सर्वजीवदयापरः।
स्वाधीनेंद्रियसंचारः षड्वर्गविजयक्षमः ॥ ५ ॥
अग्रगण्योऽतिगंभीरः पात्रापात्रविशेषवित् ।
निर्मलो नित्यसंतुष्टो निर्द्वंद्वोऽनंतशक्तिमान् ॥ ६ ॥
सद्भक्तवत्सलो धीरः कृपालुः स्मितपूर्ववान् ।
भक्तप्रियः सर्वसमो दयालुः शिष्यशासिता ॥ ७ ॥
स्वेष्टनिष्ठो गुरुः प्राज्ञो वनितापूजनोत्सुकः ।
नित्यनैमित्तिके काम्ये रतः कर्मण्यनिंदिते ॥ ८ ॥
अलोलुपोऽहिंसकश्चाऽपक्षपाती विचक्षणः ।
वित्तविद्यादिभिः पूर्णो मंत्रयंत्रादिपारगः ॥ ९ ॥
निःसंकल्पविकल्पश्च निर्णीतार्थाभिधायकः ।
तुल्यनिंदास्तुतिर्मौनी निरपेक्षो नियामकः ॥ १० ॥
इत्यादिलक्षणोपेतः श्रीगुरुः कथितः प्रिये । इति गुरुलक्षणानि । सच्छिष्यैरेवंविधो गुरुर्मृग्यः सेव्यश्च ।

---

## अथ सच्छिष्य[1]लक्षणानि ।

कादिमते—

चतुर्भिराद्यैः संयुक्तः श्रद्धावान्सुस्थिराशयः ।
अलुब्धः स्थिरगात्रश्च प्रेक्षाकारी जितेंद्रियः ॥ १ ॥
आस्तिको दृढभक्तिश्च गुरौ मंत्रे सदैवते ।
एवंविधो भवेच्छिष्यस्त्वितरो दुःखकृद्गुरोः ॥ २ ॥

---

१ शरीरमर्थं प्राणांश्च सद्गुरुभ्यो निवेद्य यः । गुरुभ्यः शिक्षते योगं शिष्य इत्यभिधीयते ।

तथा कुलार्णवेऽपि—

सच्छिष्यं तं कुलेशानि सर्वलक्षणसंयुतम् ।
क्षमादिसाधनोपेतं गुणशीलसमन्वितम् ॥ १ ॥
शुद्धदेहानुबद्धांगं धार्मिकं शुद्धमानसम् ।
दृढव्रतं सदाचारं श्रद्धाभक्तिसमन्वितम् ॥ २ ॥
कृतज्ञं पापभीतं च साधुसज्जनसंमतम् ।
आस्तिकं दानशीलं च सर्वभूतहिते रतम् ॥ ३ ॥
विश्वासविनयोपेतं वित्तशाठ्यविवर्जितम् ।
असाध्यसाधकं शूरं बलकांतिसमन्वितम् ॥ ४ ॥
अनुकूलक्रियायुक्तमप्रमत्तं विचक्षणम् ।
हितसत्यमितस्निग्धभाषिणं मुक्तदूषणम् ॥ ५ ॥
सकृदुक्तगृहीतार्थं चतुरं बुद्धिमत्तरम् ।
गृहतल्पासनोत्संगनिर्विकारमसेवकम् ॥ ६ ॥
विमृश्यकारिणं वीरं मनोदारिद्र्यवर्जितम् ।
सर्वकार्यातिकुशलं धीरं सर्वोपकारकम् ॥ ७ ॥
स्वस्वार्थे परनिंदायां विमुखं सुमुखं प्रिये ।
जितेंद्रियं सुसंतुष्टं धीमंतं ब्रह्मचारिणम् ॥ ८ ॥
त्यक्ताधिव्याधिचापल्यं शंकातंकविवर्जितम् ।
गुरुध्यानस्तुतिकथासेवनाभजनोत्सुकम् ॥ ९ ॥
गुरुदैवतभक्तं च कामिनीपूजनोत्सुकम् ।
नित्यं गुरुसमीपस्थं गुरुसंतोषकारिणम् ॥ १० ॥
वाङ्मनस्तनुभिर्नित्यं गुरुकार्यसमुत्सुकम् ।
गुर्वाज्ञापालकं देवि ! गुरुकीर्तिप्रकाशकम् ॥ ११ ॥

गुरुवाक्यप्रमाणज्ञं गुरुशुश्रूषणे रतम् ।
चित्तानुवर्तिनं प्रेक्ष्यकारिणं कुलनायिके ! ॥ १२ ॥
लज्जाभिमानगर्वादिवर्जितं गुरुसंनिधौ ।
निरपेक्षं गुरुद्रव्ये तत्प्रसादाभिकांक्षिणम् ॥ १३ ॥
कुलधर्मकथायोगियोगिनीकौलिकप्रियम् ।
कुलार्चनादिनियतं मोक्षमार्गानुगासिनम् ॥ १४ ॥
कुलशास्त्रप्रियं देवि ! पशुशास्त्रपराङ्मुखम् ।
इत्यादिलक्षणोपेतं गुरुः शिष्यं परिग्रहेत् ॥ १५ ॥
इति सच्छिष्यलक्षणानि ॥

## अथाऽसच्छिष्यलक्षणानि ।

कुलार्णवे—
दुष्टवंशभवं दुष्टं गुणहीननिरूपिणम् ।
परशिष्यं च पाषंडं धूर्तं पंडितमानिनम् ॥ १ ॥
हीनाधिकविकारांगं विकलावयवान्वितम् ।
पंगुमंधं च बधिरं मलिनं व्याधिपीडितम् ॥ २ ॥
उच्छिष्टं दुर्मुखं वापि स्वेच्छावेषधरं विटम् ।
दुर्विदग्धं कुचेष्टं च कुटिलं भीमवीक्षणम् ॥ ३ ॥
सदालस्ययुतं तन्द्राद्यूतादिव्यसनान्वितम् ।
कपाटकुड्यस्तंभादौ तिरोहिततनुं सदा ॥ ४ ॥
शून्ययुक्तिकरं क्षुद्रं वृद्धं भक्तिविवर्जितम् ।
व्यलीकवादिनं स्तब्धं प्रेषकं चपलं शठम् ॥ ५ ॥
धनस्त्रीशुद्धिरहितं निषेधविधिवर्जितम् ।
रहस्यभेदकं चापि देवकार्यार्थघातकम् ॥ ६ ॥

मार्जारबकवृत्तिं च रंध्रान्वेषणतत्परम्।
मायान्वितं कृतघ्नं च प्रच्छन्नांतरदायकम् ॥ ७ ॥
विश्वासघातकं देवद्रोहिणं पापकारिणम्।
अविश्वासमविद्यांतमनर्थसिद्धिकांक्षिणम् ॥ ८ ॥
आततायिनमादित्सुं कुत्सितं कूटसाक्षिकम्।
सर्वत्र याचकं देवि! सर्वाकृष्टाभिगामिनम् ॥ ९ ॥
असत्यनिष्ठं चासक्तं ग्राम्यादिबहुभाषिणम्।
दुर्विचारकुतर्कादिकारकं कलहप्रियम् ॥ १० ॥
वृथाक्षेपकरं मूर्खं भ्रामकं वाग्विडंबकम्।
परोक्षे दूषणकरं प्रत्यक्षे प्रियवादिनम् ॥ ११ ॥
वागृक्षवादिनं विद्याचौरमात्मप्रशंसकम्।
गुणासहिष्णुं सद्गीतमार्तिक्रोधसमन्वितम् ॥ १२ ॥
चार्वाकं दुर्जनसखं सर्वलोकविगर्हितम्।
पिशुनं परसंतापं सर्वप्राणिभयंकरम् ॥ १३ ॥
स्वक्लेशवादिनं मित्रद्रोहिणं भ्रातृवंचकम्।
जिह्वोपस्थपरं देवि! तस्करं पशुचेष्टितम् ॥ १४ ॥
अकारणद्वेषहासक्लेशक्रोधादिकारिणम्।
अतिहास्यसकर्माणं मर्मांतःपरिहासकम् ॥ १५ ॥
कामुकं चातिनिर्लज्जं मिथ्यादुश्चेष्टसूचकम्।
असूयामदमात्सर्यदंभाहंकारसंयुतम् ॥ १६ ॥
ईर्ष्यापैशुन्यपारुष्यकार्पण्यं क्रोधमानसम् ॥
अधीरं दुःखितद्वेष्यमशक्तं भाववर्जितम् ॥ १७ ॥

अप्रसन्नं चातिमूढं चिंताकुलितमानसम्।
तृष्णालोभयुतं दीनमतुष्टं सर्वयाचकम्॥ १८॥
वह्वाशिनं कपटिनं भ्रांतकं कुटिलं प्रिये!।
भक्तिश्रद्धादयाशांतिधर्माचारविवर्जितम्॥ १९॥
मातापितृगुरुप्राज्ञमहतां हास्यकारकम्।
कुलद्रव्यादिवीभत्सं गुरुसेवाभिमानिनम्॥ २०॥
स्त्रीद्विष्टं समयभ्रष्टं गुरुशप्तं कुलेश्वरि!।
इत्यादिविगुणोपेतं गुरुः शिष्यं परित्यजेत्॥ २१॥
स्नेहाद्वा लोभतो वापि दुःशिष्यं यदि दीक्षयेत्।
तस्मिन् गुरौ सशिष्ये तु देवता शापमुत्सृजेत्॥ २२॥
तस्मादेवंविधं शिष्यं न गृह्लीयात्कथंचन।
यदि गृह्लाति मोहेन तत्पापैर्व्याप्यते गुरुः॥ २३॥
मंत्रिपापं च राजानं पतिं जायाकृतं तथा।
तथा शिष्यकृतं पापं प्रायो गुरुमपि स्पृशेत्॥ २४॥

सारसंग्रहे—

राज्ञि चामात्यजो दोषः पत्नीपापं तु भर्तरि।
तथा शिष्यार्जितं पापं गुरुं प्राप्नोति निश्चितम्॥ १॥

इति निंद्यशिष्यपरिग्रहे दोषश्रवणादसच्छिष्यं न परिगृह्लीयात्। इत्यसच्छिष्यलक्षणानि॥

कुलार्णवे—

गुरुशिष्यावुभौ मोहादपरीक्ष्य परस्परम्।
उपदेशं ददन् गृह्णन् प्राप्नुयातां पिशाचताम्॥ १॥

अशास्त्रीयोपदेशं तु यो गृह्णाति ददाति यः ।
भुंजाते तावुभौ घोरान्नरकानेकविंशतिः ॥ २ ॥
अनर्हे मंत्रविज्ञानं न तिष्ठति कदाचन ।
तस्मात्परीक्ष्य वक्तव्यमन्यथा निष्फलं भवेत् ॥ ३ ॥
ज्ञानेन क्रियया वापि गुरुः शिष्यं परीक्षयेत् ।
संवत्सरं तदर्धं वा तदर्धं वा प्रयत्नतः ॥ ४ ॥
शिष्योऽपि लक्षणैरेतैः कुर्याद्गुरुपरीक्षणमिति ।

अथ शिष्यपरीक्षाकालः कादिमते—

एकद्वित्रिचतुःपंचवर्षाण्यालोच्य योग्यताम् ।
भक्तियुक्तान्गुणाँश्चापि क्रमाद्वर्णेषु संकरे ॥ १ ॥
पश्चादुक्तक्रमेणैव वदेद्विद्यामनन्यधीः ।
अन्यथा चेद्वदन्नाशं सशिष्यो गुरुराप्नुयात् ॥ २ ॥

कुलार्णवेऽपि—

एकाब्देन द्विजो योग्यः क्षत्रियो वत्सरद्वयम् ।
वैश्यो योग्यस्त्रिभिर्वर्षैश्चतुर्भिः शूद्र एव च ॥ १ ॥

तंत्रसारे—

गुरुता शिष्यता वापि तयोर्वत्सरवासतः ।

सारसंग्रहेपि—

यद्गुरुः स्वाश्रितं शिष्यं वर्षमेकं परीक्षयेत् ॥ २ ॥ इति गुरुशिष्यलक्षणानि ।

इति श्रीसत्यानंदगुरुचरणप्रसादेन श्रीविष्णुभट्टविरचितायां दीक्षाप्रकाशिकायां गुरुशिष्यलक्षणकथनं नाम द्वितीयः प्रकाशः ॥ २ ॥

---

## पित्रादिदीक्षानिषेधप्रकाशः ॥ ३ ॥

अथ पित्रादिदीक्षानिषेधः । योगिनीतंत्रे—

पितुर्मंत्रं न गृह्णीयात्तथा मातामहस्य च ।
सोदरस्य कनिष्ठस्य वैरिपक्षाश्रितस्य च ॥ १ ॥

गणेशविमर्शिन्याम्—

यतेर्दीक्षा पितुर्दीक्षा या दीक्षा वनवासिनः ।
विविक्ताश्रमिणो दीक्षा न सा कल्याणदायिका ॥ २ ॥

इत्यादिवचनादेतेभ्यो मंत्रं न गृह्णीयात् । इदं तु सिद्धेतरविषयम् ।

शक्तियामले—

सिद्धमंत्रे गुरुः सर्वमयोग्यं योग्यतां नयेत् । इत्युक्तेः सिद्धमंत्रे गुरोर्न दोषः । सिद्धमंत्रे न दुष्यतीति वचनात् ।

सूतसंहितायाम्—

उत्तमः पंचधा प्रोक्तो गुरुर्ब्रह्मसुवेदिभिः ।
ब्रह्मचारी गृहस्थश्च वानप्रस्थश्च भिक्षुकः ॥ १ ॥
अतिवर्णाश्रमी चेति क्रमश्रेष्ठा विचक्षणाः ।

सिद्धयामले—

यदि भाग्यवशेनैव सिद्धविद्यां लभेत्प्रिये ! ।
तत्रैव तां तु दीक्षेत त्यक्त्वा गुरुविचारणम् ॥ १ ॥

रुद्रयामले—

न पत्नीं दीक्षयेद्भर्ता न पिता दीक्षयेत्सुताम् ।
न पुत्रं च तथा भ्राता भ्रातरं न च दीक्षयेत् ॥ १ ॥

गणेशविमर्शिन्याम्—

प्रमादाच्च तथाऽज्ञानात्पितुर्दीक्षां समाचरेत् ।
प्रायश्चित्तं ततः कृत्वा पुनर्दीक्षां समाचरेत् ॥ १ ॥

पितुरित्युपलक्षणं मातामहादीनामपि । प्रायश्चित्तं तु अयुतसावित्रीजपः । सर्वत्र तथा दर्शनात् ।

तथा मत्स्यसूक्ते—

निर्वीर्यं च पितुर्मंत्रं शैवशाक्ते न दुष्यतीति तु कौलिकदीक्षापरम् । योगिनीतंत्रे शक्तिविद्यामधिकृत्य पितृदीक्षानिषेधात् । महातीर्थे उपरागे सति सर्वत्र मंत्रमात्रे पित्रादितो ग्रहणे न दोषः ।

तथाच—

विष्णुमंत्रमधिकृत्य योऽन्यमंत्रमुपासते ।
निष्फला जपपूजार्चा जापको रौरवं व्रजेत् ॥ १ ॥
साधु पृष्टं त्वया ब्रह्मन् वक्ष्यामि सकलं तव ।
ब्रह्मणा कथितं पूर्वं वसिष्ठाय महात्मने ॥ २ ॥
वसिष्ठोऽपि स्वपौत्राय मत्पित्रे दत्तवान्स्वयम् ।
प्रसन्नहृदयः स्वच्छः पिता मे करुणानिधिः ॥ ३ ॥
कुरुक्षेत्रे महातीर्थे सूर्यपर्वणि दत्तवान् ।
इत्यादि वैशंपायनसंहितायां शौनकं प्रति व्यासवाक्यम् ।

योगिनीतंत्रे—

निर्वीर्यं च पितुर्मंत्रं तथा मातामहस्य च ।
स्वप्नलब्धं स्त्रिया दत्तं संस्कारेणैव शुध्यति ॥ १ ॥
स्त्रीशूद्राणां साक्षादाचार्यत्वस्य निषेधात् । तथा चोक्तं
स्त्रियः शूद्रादयश्चापि बोधनीया हिताहितम् ।
तथार्हा माननीयाश्च नार्हत्याचार्यकं क्वचित् ॥ १ ॥

शूद्रान्नं शूद्रसंपर्कः शूद्रेणैव समागमः ।
शूद्राज्ज्ञानागमः कश्चिज्ज्वलंतमपि पातयेत् ॥ २ ॥

सूतसंहितायामपि—

शूद्राणां च तथा स्त्रीणां न गुरुत्वं कदाचन ।
योग्यमाद्यं गुरुं त्यक्त्वा शिष्यः क्षुद्रक्रियाविदम् ॥ ३ ॥
गुरुं समाश्रयेदन्यं यः प्रयाति स दुर्गतिम् ।

यत्तु—

साध्वी चैव सदाचारा गुरुभक्ता जितेंद्रिया ।
सर्वमंत्रार्थतत्त्वज्ञा सुशीला पूजने रता ॥ १ ॥
गुरुयोग्या भवेत्सापि कुलटापरिवर्जिता ।
स्त्रियो दीक्षा शुभा प्रोक्ता मातुश्चाष्टगुणा स्मृता ॥ २ ॥
इदं तु गुरोरुपासितमंत्रपरम् ।

तथाच भैरवतंत्रे—

स्वेष्टविद्याप्रदाने तु न कुर्याद्गुरुचिंतनम् ।

मातुरिति उपासितेऽष्टगुणम् । अनुपासिते शुभफल- मित्यर्थः । सिद्धविद्याविषयं वा इति केचित् । शक्तिविद्या विषयं वा । वस्तुतस्तु योगिनीतंत्रे । स्त्रिया दत्तमित्य- स्त्रीपदं कुलटापरं विधवापरं च । एकवाक्यत्वात् ।

स्वप्नलब्धे तु कलशे गुरोः प्राणं निवेशयेत् ।
वटपत्रे कुंकुमेन लिखित्वा ग्रहणं शुभम् ॥ १ ॥
ततः सिद्धिमवाप्नोति अन्यथा विफलं भवेत् ।

१ "विधवा" इति पाठः ।

इदं तु स्वगुरोरभावे, तत्संभवे । "तस्मादेवं मंत्रं गृह्णीयात् । स्वप्ने तु नियमो नही"ति नारदवचनात् । स्वप्नप्राप्तस्तदा शास्त्रे दृष्ट्वा सम्यक् शोध्येति स्वीकारः ।

तंत्रांतरे—

गृहीतमंत्रस्त्यक्तव्यो गुरुश्चेद्दोषसंयुतः ।
महापातकयुक्तो वा पुनश्चेद्देवनिंदकः ॥ १ ॥

यामले—

गुरुत्यागाद्भवेन्मृत्युर्मंत्रत्यागाद्दरिद्रता ।
गुरुमंत्रपरित्यागाद्रौरवं नरकं व्रजेत् ॥ २ ॥
ज्ञानहीनो गुरुस्त्याज्यो मिथ्यावादी विडंबकः ।
स्वविश्रांतिं न जानाति परशांतिं करोति किम् ॥३॥ इति ॥

दीक्षां विना जपस्य दुष्टत्वात्प्रथमं सा निरूप्यते ।
दिव्यज्ञानं यतो दद्यात्कुर्यात्पापस्य संक्षयम् ।
तस्माद्दीक्षेति सा प्रोक्ता मुनिभिस्तंत्रवेदिभिः ॥ १ ॥

सा दीक्षा चतुर्धा लौकिकी, वैदिकी, तांत्रिकी, सिद्धांतेति । सर्वाश्रमेषु दीक्षाया आवश्यकत्वम् ।

तथाच—

दीक्षामूलं जपं सर्वं दीक्षामूलं परं तपः ।
दीक्षामाश्रित्य निवसेद्यत्रकुत्राश्रमे वसन् ॥ १ ॥
अदीक्षिता ये कुर्वंति जपपूजादिकाः क्रियाः ।
न भवंति प्रिये ! तेषां शिलायां न्यस्तबीजवत् ॥ २ ॥
देवि ! दीक्षाविहीनस्य न सिद्धिर्न च सद्गतिः ।
तस्मात्सर्वप्रयत्नेन गुरुणा दीक्षितो भवेत् ॥ ३ ॥

अदीक्षितोऽपि मरणे रौरवं नरकं व्रजेत्।
तस्माद्दीक्षां प्रयत्नेन सदा कुर्याच्च तांत्रिकात्॥ ४॥
कल्पे दृष्ट्वा तु मंत्रं वै यो गृह्णाति नराधमः।
मन्वंतरसहस्रेषु निष्कृतिर्नैव विद्यते॥ ५॥
नादीक्षितस्य कार्यं स्यात्तपोभिर्नियमव्रतैः।
न तीर्थगमनेनापि नच शारीरयंत्रणैः॥ ६॥
सद्गुरोराहिता दीक्षा सर्वकर्माणि साधयेत्।

पुरश्चरणपद्धतौ—

उपदेशस्य सामर्थ्याच्छ्रीगुरोश्च प्रसादतः।
मंत्रप्रभावाद्भक्त्या च मंत्रसिद्धिः प्रजायते॥ १॥
यदृच्छयापि तं मंत्रं छद्मनापि छलेन वा।
परेरितं वाप्यादाय यज्जपेत्तदनर्थकम्॥ २॥
पुस्तके लिखितान्मंत्रानालोक्य प्रजपंति ये।
ब्रह्महत्यासमं तेषां पातकं परिकीर्तितम्॥ ३॥
निश्चयोत्साहधैर्यैश्च तत्त्वज्ञानस्य दर्शनात्।
अल्पाशी त्यक्तसंगश्च षड्भिर्मंत्रः प्रसिध्यति॥ ४॥
प्रवासी बहुभक्षी च प्रजपी नियमापहः।
नीचसंगाच्च लौल्याच्च षड्भिर्मंत्रो न सिध्यति॥ ५॥

कुलार्णवेऽपि—

स्याद्वेदाध्ययने शूद्रो नाधिकारी यथा भवेत्।
तथैवादीक्षितस्यापि नाधिकारः कुलेश्वरि!॥ १॥
श्रीगुरुं गुरुपत्नीं च तत्पुत्रान् शक्तिकौलिकान्।

दीक्षितस्तोषयेद्देवि ! यथाविभवविस्तरैः ॥ २ ॥
तत्राप्यनुकूलं मंत्रं दीक्षेत।

तथा—

स्वताराराशिकोष्ठानामनुकूलान्भजेन्मनून्।
मनने विश्वविज्ञानं त्राणं संसारबंधनात्।

वाराहीतंत्रे—

ताराचक्रं राशिचक्रं नामचक्रं तथैव च।
अत्र तेषु गुरोर्मंत्रे नान्यच्चक्रं विचारयेत् ॥ १ ॥
इति तु प्रधानतया बोद्धव्यम्।

तथा—

"धनिमंत्रं न गृह्णीयादकुलं च तथैव चे"त्यादिदर्शना-त्तच्चक्रविचारस्यावश्यकत्वात्प्रथमं तन्निरूप्यते।

तत्र च—

नृसिंहार्कवराहाणां प्रासादप्रणवस्य च।
सपिंडाक्षरमंत्राणां सिद्धादीन्नैव शोधयेत् ॥ १ ॥
स्वप्नलब्धे स्त्रिया दत्ते मालामंत्रे च त्र्यक्षरे।
वैदिकेषु च सर्वेषु सिद्धादीन्नैव शोधयेत् ॥ २ ॥

मालामंत्रस्तु वाराहीये—

विंशत्यर्णाधिका मंत्रा मालामंत्राः प्रकीर्तिताः।
नपुंसकस्य मंत्रस्य सिद्धादीन्नैव शोधयेत् ॥ १ ॥
हंसस्याष्टाक्षरस्यापि तथा पंचाक्षरस्य च।

---

१ परिशिष्टे कुलाकुलादिचक्रविचारे सर्वं विशदीकृतम्।

एकद्वित्र्यादिबीजस्य सिद्धादीन्नैव शोधयेत् ॥ २ ॥
हंसः सूर्यः।

तथा—

एकाक्षरस्य मंत्रस्य मालामंत्रस्य पार्वति ! ।
वैदिकस्य च मंत्रस्य सिद्धादीन्नैव शोधयेत् ॥ १ ॥

इत्यादिवचनादेषु विचारो नास्ति। वस्तुतस्तु प्रशंसापरम्। सावित्र्यादिवैदिकमंत्रादन्यत्र विचारस्यावश्यकत्वम्। दुरदृष्टवशात् वैदिकमंत्रस्य स्वप्नादौ प्राप्त्या तद्दोषस्य दृष्टत्वादिति सांप्रदायिकाः।

इति श्रीसत्यानंदगुरुचरणप्रसादेन श्रीविष्णुभट्टविरचितायां दीक्षाप्रकाशिकायां पित्रादिदीक्षानिषेधकथनं नाम तृतीयः प्रकाशः॥ ३॥

---

## सर्वतोभद्रमण्डलप्रकाशः।

अथ सर्वतोभद्रमंडलम्। तदुक्तं शारदायाम्—

चतुरस्रे चतुष्कोष्ठे कर्णसूत्रसमन्विते।
चतुर्ष्वपि च कोष्ठेषु कोणसूत्रचतुष्टयम् ॥ १ ॥
मध्ये मध्ये यथा मत्स्या भवेयुः पातयेत्तथा।
पूर्वापरायते द्वे द्वे मंत्री याम्योत्तरायते ॥ २ ॥
पातयेत्तेषु मत्स्येषु समं सूत्रचतुष्टयम्।
पूर्ववत्कोणकोष्ठेषु वर्णसूत्राणि पातयेत् ॥ ३ ॥
तदुद्भूतेषु मत्स्येषु दद्यात्सूत्रचतुष्टयम्।
यावच्छतद्वयं मंत्री षट्पंचाशत्पदान्यपि ॥ ४ ॥
तावत्तेनैव विधिना तत्र सूत्राणि पातयेत्।

षड्विंशता पदैर्मध्ये लिखेत्पद्मं सलक्षणम् ॥ ५ ॥
बहिः पंक्त्या भवेत्पीठं पंक्तियुग्मेन वीथिकाः।
द्वारशोभोपशोभास्ता द्वाभ्यां च परिकल्पयेत् ॥ ६ ॥
शास्त्रोक्तविधिना मंत्री ततः पद्मं समालिखेत्।
पद्मक्षेत्रस्य संत्यज्य द्वादशांशं बहिः सुधीः ॥ ७ ॥
तन्मध्ये विभजेद्वृत्तैस्त्रिभिः समविभागतः।
आद्यं स्यात्कर्णिकास्थानं केसराणां द्वितीयकम् ॥ ८ ॥
तृतीयं तत्र पत्राणामुक्तांशेन[1] दलाग्रकम्।
वाह्यवृत्तांतरालस्य मानेन विधिना सुधीः ॥ ९ ॥
निधाय केसराग्रेषु परितोऽर्धनिशाकरान्।
लिखित्वा संधिसंस्थानि तत्र सूत्राणि पातयेत् ॥ १० ॥
दलाग्राणां च यन्मानं तन्मानं वृत्तमालिखेत्।
तदंतरालं तन्मध्यसूत्रस्योभयतः सुधीः ॥ ११ ॥
आलिखेद्वाह्यवृत्तेन दलाग्राणि समंततः।
दलमूलेषु युगशः केसराणि प्रकल्पयेत् ॥ १२ ॥
एतत्साधारणं प्रोक्तं पंकजं तंत्रवेदिभिः।
पदानि त्रीणि पादार्थं पीठकोणेषु मार्जयेत् ॥ १३ ॥
अवशिष्टैः पदैर्विद्वान्पीठगात्राणि कल्पयेत्।
पदानि वीथिसंख्यानि मार्जयेत्पंक्त्यभेदतः ॥ १४ ॥
दिक्षु द्वाराणि रचयेद् द्विचतुःकोष्ठकैस्ततः।
पादैस्त्रिभिरथैकेन शोभाः स्युर्द्वारपार्श्वयोः ॥ १५ ॥

---

[1] "द्वादशांशेनेत्यर्थः"।

उपशोभाः स्युरेकेन त्रिभिः कोष्ठैरनंतरम्।
अवशिष्टैः पदैः षड्भिः कोणानां स्याच्चतुष्टयम् ॥ १६ ॥
रंजयेत्पंचभिर्वर्णैर्मंडलं तन्मनोहरम्।
पीतं हरिद्राचूर्णं स्यात्सितं तंदुलसंभवम् ॥ १७ ॥
कुसुंभचूर्णमरुणं कृष्णं दग्धपुलाकजम्।
बिल्वादिपत्रजं श्याममित्युक्तं पंचवर्णकम् ॥ १८ ॥
अंगुलोत्सेधविस्ताराः सीमारेखाः सिताः शुभाः।
कर्णिका पीतवर्णेन केसराण्यरुणेन च ॥ १९ ॥
शुभ्रवर्णेन पत्राणि तत्संधिः श्यामलेन च।
रजसा रंजयेन्मंत्री यद्वा पीतेन कर्णिका ॥ २० ॥
केसराः पीतरक्ताः स्युररुणानि दलान्यपि।
संधयः कृष्णवर्णाः स्युः पीतेनाप्यसितेन वा ॥ २१ ॥
रंजयेत्पीठगर्भाणि पादाः स्युररुणप्रभाः।
गात्राणि तस्य शुक्लानि वीथीषु च चतुर्ष्वपि ॥ २२ ॥
आलिखेत्कल्पलतिकादलपुष्पफलान्विताः।
वर्णैर्नानाविधैश्चित्राः सर्वदृष्टिमनोहराः ॥ २३ ॥
द्वाराणि श्वेतवर्णानि शोभारक्ताः समीरिताः।
उपशोभाः पीतवर्णाः कोणान्यसितकानि च ॥ २४ ॥
तिस्रो रेखा बहिः कुर्यात्सितरक्ताऽसिताः क्रमात्।
मंडलं सर्वतोभद्रमेतत्साधारणं स्मृतम् ॥ २५ ॥

अथान्यप्रकारः—

चतुरस्रं भुवं भित्त्वा दिग्भ्यो द्वादशधा सुधीः।

पातयेत्तत्र सूत्राणि कोष्ठानां दृश्यते शतम् ॥ १ ॥
चतुश्चत्वारिंशदाढ्यं पश्चात्षट्त्रिंशतांबुजम् ।
कोष्ठैः प्रकल्पयेत्पीठं पंक्त्या नैवात्र वीथिकाः ॥ २ ॥
द्वारशोभा यथापूर्वमुपशोभा न दृश्यते ।
अवशिष्टैः पदैः कुर्यात्षड्भिः कोणानि तंत्रवित् ॥ ३ ॥
विदध्यात्पूर्ववच्छेषमेवं वा मंडलं स्मृतम् । इति ।

"अथ नवनाभ-पंचार-मंडलप्रकारः" ।

चतुरस्रे चतुःषष्टिपदान्यारचयेत्सुधीः ।
पदैश्चतुर्भिः पद्मं स्यान्मध्ये तत्परितः पुनः ॥ १ ॥
वीथीश्चतस्रः कुर्वीत मंडलांतावसानिकाः ।
दिग्गतेषु चतुष्केषु पंकजानि समालिखेत् ॥ २ ॥
विदिग्गतचतुष्काणि भित्त्वा षोडशधा सुधीः ।
मार्जयेत्स्वस्तिकाकारं श्वेतपीतारुणासितैः ॥ ३ ॥
रजोभिः पूरयेत्तानि स्वस्तिकानि शिवादितः ।
प्राक्प्रोक्तेनैव मार्गेण शेषमन्यत्प्रकाशयेत् ॥ ४ ॥
नवनाभमिदं प्रोक्तं मंडलं सर्वसिद्धिदम् ।
पंचारमंडलं प्रोक्तमेतत्स्वस्तिकवर्जितम् ॥ ५ ॥
दीक्षायां देवपूजार्थं मंडलानां चतुष्टयम् ।
सर्वतंत्रानुसारेण प्रोक्तं सर्वसमृद्धिदम् ॥ ६ ॥

दीर्घविस्तारयोः षोडशकोष्ठे कृते एतद्भवति । तत्र कर्णसूत्रपातनं कोष्ठानां परिमाणार्थम् । इति सर्वतोभद्रमंडलम् ।

अथ शारदातिलकोक्तं प्रकारांतरेणरेखा-१३ कोष्ठक. १२



अथ शारदातिलकोक्तं पंचारमंडलम्



अथ शारदातिलकोक्तं सर्वतोभद्रमंडलरेखा. १७ कोष्ठक. १६



अथ शारदातिलकोक्तं नवनाभमंडलम्।



इति श्रीसत्यानंदगुरुचरणप्रसादेन श्रीविष्णुभट्टविरचितायां दीक्षाप्रकाशिकायां सर्वतोभद्रमंडलकथनं नाम चतुर्थः प्रकाशः॥ ४ ॥

---

## मंत्रसंस्कारप्रकाशः ।

अथ मंत्राणां दश संस्काराः। गौतमीये।

जननं जीवनं पश्चात्ताडनं बोधनं तथा।
अथाभिषेको विमलीकरणाप्यायने पुनः ॥ १ ॥

तर्पणं दीपनं गुप्तिर्दशैता मंत्रसंस्क्रियाः।
स्वर्णादिपात्रे संलिख्य मातृकामंत्रमुत्तमम् ॥ २ ॥
काश्मीरचंदनेनापि भस्मना वाथ सुव्रत।
काश्मीरं शक्तिसंस्कारे चंदनं वैष्णवे मनौ ॥ ३ ॥
शैवे भस्म समाख्यातं मातृकामंत्रलेखने।
मंत्राणां मातृकामध्यादुद्धारो जननं स्मृतम् ॥ ४ ॥
पंक्तिक्रमेण विधिना मुनिभिस्तत्र निश्चितम्।
प्रणवांतरितान् कृत्वा मंत्रवर्णान् जपेत्सुधीः ॥ ५ ॥
प्रत्यहं शतवारं तु जीवनं तदुदाहृतम्।
मंत्रवर्णान्समालिख्य ताडयेच्चंदनांभसा ॥ ६ ॥
प्रत्येकं वायुबीजेन पूर्वोक्तं ताडनं मतम्।
शैवादिमंत्रभेदेन प्रोक्तं द्रव्यत्रयं शुभम् ॥ ७ ॥
विलिख्य मंत्रवर्णांस्तु प्रसूनैः करवीरजैः।
तन्मंत्रवर्णसंख्यातैर्हन्याद्रेफेण बोधनम् ॥ ८ ॥
तत्तन्मंत्रोक्तविधिना अभिषेकः प्रकीर्तितः।
अश्वत्थपल्लवैः सिंचेन्मंत्री मंत्रार्णसंख्यया ॥ ९ ॥
संचिंत्य मनसा मंत्रं सुषुम्णामूलमध्यतः।
ज्योतिर्मंत्रेण विधिवद्दहेन्मलत्रयं यती ॥ १० ॥
तारं व्योमाग्निमनुयुग्दंडी ज्योतिर्मनुर्मतः। तारं प्रणवः, व्योमो हकारः। अग्निः रेफः। मनुरौकारः। दंडी अनुस्वारः।
स्वर्णेन कुशतोयेन पुष्पतोयेन वा तथा ॥ ११ ॥
तेन मंत्रेण विधिवदाप्यायनविधिः स्मृतः।

मंत्रेण वारिणा मंत्रे तर्पणं तर्पणं मतम्॥ १२ ॥
मधुना शक्तिमंत्रे तु वैष्णवे चेंदुमज्जलैः।
शैवे घृतेन दुग्धेन तर्पणं सम्यगीरितम् ॥ १३ ॥

अभिषेकेपि तथा—

तारमायारमायोगो मनोर्दीपनमुच्यते।
जप्यमानस्य मंत्रस्य गोपनं तत्प्रकाशनम् ॥ १४ ॥
संस्कारा दश संप्रोक्ताः सर्वतन्त्रेषु गोपिताः।
यान्कृत्वा संप्रदायेन मंत्री वाञ्छितमाप्नुयात् ॥ १५ ॥
मलत्रयमिति। आणव्यमायिककर्मिणं।
मायिकं नाम दोषोत्थं पौरुषं कर्मिणं मतम्।
आणव्यं तद्द्वयं ज्ञेयं विरुद्धं तन्मलत्रयम् ॥ १६ ॥

"तारमायारमायोग" इति तारमायारमाबीजपुटितं मंत्रमष्टोत्तरशतं जपेदित्यर्थः। तथाच विश्वसारे—

तारमायारमाबीजपुटितेन जपेन्मनुम्।
शतमष्टोत्तरं चैव दीपयेत्साधकोत्तमः ॥ १ ॥

इति श्रीसत्यानंदगुरुचरणप्रसादेन श्रीविष्णुभट्टविरचितायां दीक्षाप्रकाशिकायां मंत्राणां दशसंस्कारकथनं नाम पंचमः प्रकाशः ॥ ५ ॥

---

## पल्लवाद्युपचारप्रकाशः ॥ ६ ॥

अथ पंचपल्लवमाह वसिष्ठः—

पनसाम्रं तथाश्वत्थवटं बकुलमेव च।
पंचपल्लवमित्युक्तं मुनिभिस्तंत्रवेदिभिः ॥ १ ॥

नवरत्नमपि तत्रैव—

मुक्तामाणिक्यवैडूर्यगोमेदान् वज्रविद्रुमौ ।
पद्मरागं मरकतं नीलं चेति यथाक्रमम् ॥ २ ॥

अथ कूर्चप्रमाणं । डामरे—

सप्तविंशतिदर्भाणां वेण्यग्रे ग्रंथिभूषितम् ।
विष्टरे सर्वयज्ञेषु लक्षणं परिकीर्तितम् ॥ ३ ॥

अथ दंतकाष्ठमंत्रमाह दक्षिणामूर्तिसंहितायाम्—

क्लीमंते कामदेवाय सर्वांते जनचालिखेत् ।
प्रियायेति हृदंतोऽयं मनुर्दंतविशुद्धये ॥ १ ॥

पंचमीश्वरीतंत्रे—

प्रत्यहं दंतकाष्ठं तु प्लक्षकाष्ठं तु मारणे ।
मोहने खादिरं प्रोक्तं स्तंभने चूतपल्लवम् ॥ १ ॥
वश्ये चाश्वत्थकाष्ठं तु रक्षार्थं वंजुलस्य हि ।
अयं क्रमो महादेवि! त्रिलोकेषु न विद्यते ॥ २ ॥

सारसंग्रहे—

वक्रमूलाणुना नित्यं क्षालयेत्सिद्धिहेतवे ।

अथ पंचगव्यप्रमाणं गौतमीये—

पंचगव्येन तद्देहं मंडपं च विशोधयेत् ।
पलमात्रं दुग्धभागं गोमूत्रं तावदिष्यते ।
घृतं च पलमात्रं स्याद् गोमयं तोलकद्वयम् ॥ १ ॥
दधि प्रसृतिमात्रं स्यात्पंचगव्यमिदं स्मृतम् ।
अथवा पंचगव्यानां समानो भाग इष्यते ॥ २ ॥
मूलमंत्रेण संमंत्र्य तेनैव परिशोधयेत् ।
तेन सर्वविशुद्धिः स्यात्सर्वपापनिकृंतनम् ॥ ३ ॥

अथ कुंभविधानं तत्रैव—

हैमं रौप्यं तथा ताम्रं मार्तिकं वा स्वशक्तितः।
वित्तशाठ्यं न कुर्वीत कृते नैष्फल्यमाप्नुयात् ॥ १ ॥
षट्त्रिंशदंगुलं कुंभं विस्तारोन्नतिशालिनम्।
षोडशं द्वादशं वापि ततो न्यूनं न कारयेत् ॥ २ ॥

अथ स्थंडिलप्रमाणं शारदायाम्—

नित्यं नैमित्तिकं होमं स्थंडिले वा समाचरेत्।
हस्तमात्रेण तत्कुर्याद्वालुकाभिः सुशोभनम्।
अंगुलोत्सेधसंयुक्तं चतुरस्रं समंततः ॥ १ ॥

हस्तलक्षणं तु महाकपिलपंचरात्रे—

विन्यस्तैस्तिर्यगष्टाभिर्यवैर्मानांतरांगुलम्।
शालिभिर्वा ऋजुन्यस्तैस्त्रिभिर्मानांतरं भवेत् ॥ १ ॥
आचार्यदक्षिणकरे मध्यमांगुलिमध्यमम्।
पर्वणोरंतरं दीर्घं मात्रांगुलमुदाहृतम् ॥ २ ॥
विनाङ्गुष्ठेन शेषाभिर्मुष्टिमंगुलिभिः कृतम्।
चतुर्धा विभजेदेको भागो मुष्ट्यंगुलः स्मृतः ॥ ३ ॥
यं कंचित्पौरुषायामं विभज्य दशधा पुनः।
एकं द्वादशधा भागं कृत्वा तेष्वेकमङ्गुलम् ॥ ४ ॥
देहलब्धांगुलं नाम जानीयात्तस्य तत्पुनः।
एभिश्चतुर्विंशतिभिर्हस्तः स्यादंगुलैः क्रमात् ॥ ५ ॥
उच्छ्रायः प्रतिमायाः स्यात्सहासानांगुलाश्रयः।

महामानांगुलिरिति मात्रांगुलिरिहोच्यते ॥ ६ ॥
प्रासादादींश्च तेनैव कुर्यान्मानांतरेण वै।
वेदिकापीठशिविकारथादीनां विधिः पुनः ॥ ७ ॥
मानांतरांगुलेनैव भवेन्नान्येन केनचित्।
यागोपकरणानां च कुर्यान्मानांगुलेन वै ॥ ८ ॥
होमांगानि स्रुचादीनि कुंडं मुष्ट्यंगुलाश्रयम्।
देहलब्धांगुलेनैव प्रतिमांगानि कल्पयेत् ॥ ९ ॥

अत्र आचरते आचारयतीत्याचार्यो यजमानः। "एतावदुक्तं यन्मानं यजमानस्य तद्भवेदिति" सारसंग्रहवचनात्।

शारदायामपि—

चतुर्विंशत्यंगुलाढ्यं हस्तं तंत्रविदो विदुः ॥ १ ॥
कर्तुर्दक्षिणहस्तस्य मध्यमांगुलिपर्वणः ॥ १ ॥
मध्यस्य दीर्घमानेन मात्रांगुलमितीरितम्।
यवानामष्टभिः क्लृप्तं मानांगुलमितीरितम् ॥ २ ॥

अथ त्रिविधगंधाष्टकं तत्रैव शक्तेः—

चंदनागुरुकर्पूरचोरकुंकुमरोचनाः।
जटामांसी कपियुता शक्तेर्गंधाष्टकं विदुः ॥ १ ॥

विष्णोः—

चंदनागुरुह्रीवेरकुष्टकुंकुमसेव्यकाः।
जटामांसीमुरमिति विष्णोर्गंधाष्टकं स्मृतम् ॥ २ ॥

शिवस्य—

चंदनागरुकर्पूरतमालजलकुंकुमम्।
उशीरं कुष्टसंयुक्तं शैवं गंधाष्टकं स्मृतम् ॥ ३ ॥

| शक्तेः | विष्णोः | शिवस्य |
|---|---|---|
| १ चंदन | १ चंदन | १ चंदन |
| २ अगरु | २ अगरु | २ अगरु |
| ३ कर्पूर | ३ वारो | ३ कर्पूर |
| ४ कचूरो | ४ उपलोट | ४ तमालपत्र |
| ५ केसर | ५ केसर | ५ जलवारो |
| ६ गोरोचन | ६ झेवरिका | ६ केसर |
| ७ जटामांसी | ७ जटामांसी | ७ रक्तचंदन |
| ८ रक्तचंदन | ८ मुरामांसी | ८ उपलोट |

अथ सर्वौषध्यः—

कुष्टं मांसी हरिद्रे द्वे वचाचंदनशैलजम्।
कर्पूरागरुमुस्ता च सर्वौषध्यो दश स्मृताः॥ १॥

उपलोट १ मुरामांसी २ हरिद्रे द्वे ३ वचकावरि ४ चंदन ५ वारो ६ कर्पूर ७ अगर ८ मोथ १०॥

राघवभट्टः—

सर्वत्रैव प्रशस्तोऽब्जः शिवसूर्यार्चनं विना।

"अब्जः शंखः।"

अथ दशांगधूपः—

मधु मुस्तं घृतं गंधं गुग्गुल्वगरु शैलजम्।
सरजं सिह्लसिद्धार्थं दशांगो धूप इष्यते॥ १॥

मधु १ मोथ २ घृत ३ सुकर ४ गुग्गल ५ अगरु ६ वारो ७ शिलारस ८ लोबान ९ सर्षप १०॥

अथ षडंगधूपः—

सिताज्यमधुसंमिश्रं गुग्गुल्वगरुचंदनम् ।
षडंगधूपमेतत्तु सर्वदेवप्रियं सदा ॥ १ ॥

अथ भूतलिपिः । शारदायाम्—

ततो भूतात्मका वर्णाः पंचपंच विभागतः ।
वाय्वग्निभूजलाकाशाः पंचाशल्लिपयः क्रमात् ॥ १ ॥
पंच ह्रस्वाः पंच दीर्घा बिंद्वंताः संधिसंभवाः ।
पंचशः कादयः षक्षळसहांताः समीरिताः ॥ २ ॥

| वायुः | अग्निः | भूः | जलं | आकाशः |
|---|---|---|---|---|
| अ | इ | उ | ऋ | ऌ |
| आ | ई | ऊ | ॠ | ॡ |
| ए | ऐ | ओ | औ | अं |
| क | ख | ग | घ | ङ |
| च | छ | ज | झ | ञ |
| ट | ठ | ड | ढ | ण |
| त | थ | द | ध | न |
| प | फ | ब | भ | म |
| य | र | ल | व | श |
| ष | क्ष | ळ | स | ह |

अथ वर्णौषधयस्तु तंत्रराजे—

सितरक्ते चंदने च मांसी पिप्पलकस्तथा ।
लज्जालुका शिखिशिखा दर्भाः पाटलभृंगकौ ॥ १ ॥

श्रीदेवीति समुद्दिष्टा वायुवर्णौषधानि वै।
लघुश्चंद्रो मुरो बिल्वोदुंबरप्लक्षकस्तथा ॥ २ ॥
कृष्णशंखप्रसूना च चित्रक्रांतेरिति क्रमात्।
वह्निवर्णौषधानि स्युः पत्रं सर्गस्य कीर्तितम् ॥ ३ ॥
उशीरकुष्टौ चोरगुहे काश्मरी चाग्निमंथकम्।
रोहिणस्तुलसी पोत्री सदा भद्रेति च क्रमात् ॥ ४ ॥
भूमिवर्णौषधान्युक्तान्येभिस्तेषां समर्चनम्।
सलिलं घुसृणं ग्रंथिपर्णी शोणतृणं तथा ॥ ५ ॥
बृहतींद्रलता चैव दूर्वालक्ष्मीरिति क्रमात्।
श्रीदेवीति जलार्णानामौषधानि क्रमेण वै ॥ ६ ॥
कंकोलं च तथा जाती रोचना कलविंकिका।
स्थिराह्वसिंही दुंदूकमपामार्गोऽजलिः सदा ॥ ७ ॥
इत्युक्तानि स्ववर्णानामौषधानि क्रमेण वै।
तैस्तेषामर्चनं कुर्यात्तत्तद्दिष्टार्थसिद्धये ॥ ८ ॥

सौभाग्यरत्नाकरेऽपि—

चंदनकुचंदनागरुकर्पूरोशीरकुष्टवालकुंकुमकंकोलजातिफलजटामांसीमुरचोरग्रंथिगोरोचनापत्रपिप्पलबिल्वगुहपृश्निपर्णीचित्रकलवंगकत्तृणकट्फलवंदिन्युदुंबरपाषाणभेदपद्मशंखपुष्पीमयूरशिखाप्लक्षाग्निमंथसिंहीकुशकृष्णशंखपुष्पीरोहिणस्योनाकबृहतीपाटलमूषिकपर्णीतुलस्यपामार्गेंद्रवल्लीभृंगराजापराजितातालमूलीकृतांजलिदूर्वाश्रीदेवीकुमारीभृंगीभद्रमुस्तेत्येकपंचाशदौषधयः क्रमादकारादिक्षकारांतैकपंचाशद्वर्णानामिति।

अथवा—

क्षीरद्रुमकषायेण पलाशत्वग्भवेन वा।
तीर्थोदकैर्वा गंधाद्यैः सुवासितमथांबुना ॥ १ ॥

वासिष्ठे—

ततस्तच्छिरसि स्वस्य हस्तं दत्वा शतं जपेत्।
अष्टोत्तरं ततो मंत्रं दद्यादुदकपूर्वकम् ॥ १ ॥
आवयोस्तुल्यफलदो भवत्वेवमुदीरयेत्।

गौतमीये—

न्यासजालं तस्य देहे गुरुः सन्न्यस्य यत्नतः।
दक्षकर्णे वदेन्मंत्रं त्रिवारं पूर्णमानसः ॥ १ ॥
दक्षेति द्विजातिविषयम्।

तथाच तंत्रे—

दक्षकर्णे शिशोर्विद्यामेकोच्चारेण चोच्चरेत्।
विधिरेष द्विजातीनां स्त्रीशूद्राणां च वामतः ॥ १ ॥

विश्वसारे—

दक्षकर्णे वदेन्मंत्रमृष्यादिकसमन्वितम्।
तथा तस्मिन्क्षणे देवि ! जपेन्मंत्रं शताष्टकम् ॥ १ ॥

तंत्रराजे—

देवतागुरुमंत्रात्मतत्वैक्यं भावयन्मुदा।
शतं जपेत्तदग्रस्थो निकटे त्रिदिनं वसेत् ॥ १ ॥
नचेत्संचारिणी शक्तिर्गुरुमेति न संशयः।
तस्मात्तदंतिके तस्य पूजादेशादिकृद्वसेत् ॥ २ ॥

तंत्रान्तरे—

शरीरमर्थप्राणांश्च सर्वं तस्मै निवेदयेत्।

ततः प्रभृति कुर्वीत गुरोः प्रियमनन्यधीः ॥ १ ॥
यद्यदिष्टतमं लोके गुरवे तन्निवेदयेत् ।

पुरश्चरणपद्धतौ—

ततो जातमंत्रः स्वमंत्रप्रदाय
प्रदद्याच्छिवे दक्षिणामा-त्मशक्त्या ।
तदावश्यकत्वं वदेत्......
दशेषागमेशाविशेषाय सिद्धेः॥

तथा नारदीये—

आचार्यादनभिप्राप्तः प्राप्तश्चादत्तदक्षिणः ।
अभ्यस्तोऽपि सदा मंत्रः श्रेयसे नावकल्पते ॥ २ ॥

मंत्रसंग्रहे—

न गृही ज्ञानमात्रेण परत्रेह च मंगलम् ।
प्राप्नोति चंद्रवदने ! दानहोमादिभिर्विना ॥ ३ ॥
गृहस्थो यदि दानादि दद्यान्न जुहुयाद्यदि ।
पूजयेद्विधिना नैव कः कुर्यात्तदनुग्रहम् ॥ ४ ॥

स्वतंत्रतंत्रे दक्षिणानियमो यथा—

गुरवे दक्षिणां दद्यात्प्रत्यक्षाय शिवात्मने ।
सर्वस्वं वा तदर्धं वा तदर्धं वा तदाज्ञया ।
न चेत्संचारिणीशक्तिः कथमस्य भविष्यति ॥ १ ॥
गजाश्वमहिषीमेष पशुदासीमहीयुतम् ।
अपूर्वं भूषणं वासो भवनं चान्यदीप्सितम् ॥ २ ॥
दद्यात्स्वशक्तितो भक्त्या ह्यशक्तो यदि सर्वदा ।
सर्वथाऽसौ तदायत्तस्तेन सिद्धिर्भविष्यति ॥ ३ ॥

नीलतंत्रेऽपि—

गोभूहिरण्यवस्त्राद्यैस्तोषयेद्गुरुमात्मनः ।

सर्वस्वं दक्षिणां दद्यात्तदर्धं वा दयान्विते ॥ १ ॥
चतुर्थांशं दशांशं वा गाश्च दद्यात्पयस्विनीः ।
भूमिं वित्तकरीं दद्यात्पुत्रपौत्रानुजीविनीम् ॥ २ ॥
गुरुसंतोषमात्रेण सिद्धिर्भवति शाश्वती ।
अन्यथा नैव सिद्धिः स्याद्दुष्टमंत्रोऽपि सिध्यति ॥ ३ ॥
यथा दत्वातिसंतुष्टः प्रसन्नो वरदो मनुः ।
विप्रेभ्यो भोजनं दद्याद्बहुमानपुरःसरम् ॥ ४ ॥

कुलामृते—

वित्तशाठ्यं परित्यज्य सर्वकर्माणि कारयेत् ।
वित्तशाठ्यं निहंत्याशु पुराणायुर्यशोधनम् ॥ १ ॥
गुरुदेवं वंचयित्वा यः कुर्याद्धनसंचयम् ।
तेन तद्भुज्यते नैव ह्रियते राजतस्करैः ॥ २ ॥

कुलार्णवे—

श्रीगुरुं गुरुपत्नीं च तत्पुत्रान् शक्तिकौलिकान् ।
दीक्षितस्तोषयेद्देवि ! यथाविभवविस्तरैः ॥ १ ॥

कुलसारे—

दीक्षाहीनान्पशून्यस्तु भोजयेद्वा स्वमंदिरे ।
स याति परमेशानि ! नरकानेकविंशतिः ॥ १ ॥

दीक्षादिवसे गुरुशिष्ययोरुपवासे दोषमाह—

योगिनीतंत्रे—

मंत्रं दत्त्वा गुरुश्चैव उपवासं यदाचरेत् ।
महांधकारे नरके कृमिर्भवति नान्यथा ॥ १ ॥
दीक्षां कृत्वा यदा मंत्री चोपवासं समाचरेत् ।
तस्य देवः सदा रुष्टः शापं दत्वा व्रजेत्पुरम् ॥ २ ॥

अथ दीक्षादिनात्पूर्वं कायिकवाचिकमानसिकसांसर्गिक चतुर्विधपापक्षयार्थं दीक्षाग्रहणाधिकारसिद्ध्यर्थं प्रायश्चि कुर्यात्। तद्यथा—

ॐ अद्येत्यादि० अमुकप्रवरान्वितोऽमुकगोत्रोत्पन्नोऽमु कवेदांतर्गतामुकशाखाध्यायी अमुकदेवशर्माऽहमशेषपापक्ष यपूर्वकाऽमुकीविद्यावाऽमुकमंत्रग्रहणाधिकारसिद्ध्यर्थं विष्णु पूजनपूर्वकं प्रायश्चित्तं करिष्ये। इति संकल्प्य विष्णो षोडशोपचारपूजां समाप्य ॥ ॐ अद्येत्यादि० करिष्यमाण प्रायश्चित्तस्य पूर्वांगं गोमिथुनप्रत्याम्नाय भूतसार्धसप्तढबुक द्रव्यं कस्मैचिद्ब्राह्मणाय दास्ये ॥ ॐ अद्येत्यादि० सिध्य त्रीणि प्राजापत्यानि प्रतिप्राजापत्यं अयुतसंख्यागायत्री जपद्वाराऽचरिष्ये ॥ पुनर्जलमादाय कृतस्य प्रायश्चित स्यांत्यभूतं गोमिथुनप्रत्याम्नाय "सार्धसप्तढबुक"द्रव्यं क स्मैचिद्ब्राह्मणाय दास्ये ॥

अथ दंतकाष्ठे अमंगलदिगग्रपाते दुःस्वप्नदर्शने च प्राय श्चित्तमाह ॥ तत्र प्रायश्चित्तं नृसिंहमंत्रं पठित्वा दुःस्वप्नसूच कान्दोषान् जहि पुनर्नृसिंहमंत्रं पठित्वा स्वाहा। इत्यष्टो त्तरशतं जुहुयात् ॥ अथवा एवमेवास्त्रमंत्रेण होमः कार्यः नृसिंहमंत्रस्तु ॥

वर्णांत्यं वह्निसंस्थं तु मनुस्वरविभूषितम्।
विंदुनादयुतं प्रोक्तं बीजं नरहरेः शुभम् ॥ १ ॥ एतेन
"क्ष्रौं"इत्युक्तम्। अस्त्रमंत्रस्तु मूलविद्यायाः।

अथापस्तंबमते स्वस्तिवाचनम्।

ॐ कर्मणः पुण्याहं भवंतो ब्रुवंतु ॥ २ ॥ ॐ पुण्याहं ३ ॥ ॐ कर्मणे स्वस्तिं भवंतो ब्रुवंतु ३ ॥ ॐ आयुष्मते स्वस्ति ३ ॥ ॐ कर्मणः ऋद्धिं भवंतो ब्रुवंतु ३ ॥ ॐ ऋ-द्ध्यतां ३ ॥ एवमेकैकं त्रिस्त्रिः सकृत्सकृद्वा ॥ इति स्वस्ति-वाचनम् ॥

इति श्रीसत्यानंदगुरुचरणप्रसादेन श्रीविष्णुभट्टविरचितायां दीक्षाप्रकाशिकायां पल्लवादिकथनं नाम षष्ठःप्रकाशः६

---

## दीक्षाधिवासनप्रकाशः ॥ ७ ॥

अथ दीक्षा—

तत्र यथोक्तलक्षणः शिष्यो यथोक्तलक्षणं गुरुं पूर्वं चिरकालसेवितं शुश्रूषावित्तप्रदानविनयप्रणामाद्यैर्बहुपरितोषितं सुस्नातं कृतपूर्वाह्णिकक्रियं स्वयं च कृतपूर्वोक्तप्रायश्चित्तः सुस्नातः कृतपूर्वाह्णिककृत्यः समलंकृतः पंचवाद्यपुरःसरं विहितकाले दीक्षादिनात्पूर्वदिने गुरुगृहे गत्वा गणपतिपूजनस्वस्तिवाचनपूर्वकं संकल्पं कुर्यात्। तद्यथा। ॐ अद्येत्यादि० अमुकप्रवरान्वितोऽमुकगोत्रोत्पन्नोऽमुकवेदांतर्गतोऽमुकशाखाध्यायी ब्राह्मणश्चेदमुकदेवशर्मा, क्षत्रियश्चेदमुकवर्मा, वैश्यश्चेदमुकगुप्तः, शूद्रश्चेदमुकदासोऽहं धर्मार्थकाममोक्षप्राप्त्यर्थममुकदेवताया अमुकीविद्याया"वाऽमुकमंत्र" ग्रहणं करिष्ये इति कुशहस्तः संकल्प्य कुरुष्वेति सदस्यैः कृतप्रतिवचनः शिष्यो गुरुचरणे सामग्रीमादाय गुरोरभिमुखं स्थित्वा तं वृणुयात्। तद्यथा। ॐ साधुभवानास्ताम्। ॐ साध्वहमासे। ॐ अर्चयिष्यामो भवंतं ॥ ॐ

अर्चय। ततो दक्षिणजानुं धृत्वा पठेत्। तद्यथा॥ अद्येत्यादि० अमुकदेवताया अमुकीविद्याया "वाऽमुकमंत्रग्रहणार्थं" अमुकप्रवरान्विताऽमुकगोत्रिणममुकवेदांतर्गताऽमुकशाखाध्यायिनममुकदेवशर्माणं त्वामेभिर्यथाशक्तिविहितवरणसाधनैर्गुरुत्वेन वृणे इति पाद्यादिभिरभ्यर्च्य कुंडलस्वर्णयज्ञोपवीतहारकेयूरवलयांगुलिमुद्रिकावसनादि गुरुपादयोर्निक्षिप्य पंचमुद्राभिः[1] प्रणमेत्। ततो वृतोऽस्मीति गुरुणा प्रतिवचने दत्ते शिष्यः कृतांजलिर्यथोचितं गुरुकर्म कुरुष्वेति ब्रूयात्। ततो गुरुः करवाणीति ब्रूयात्। इत्थं गुरुवरणं विधाय कुंडमंडपश्चेत्तदनुज्ञयाऽष्टौ ब्राह्मणान्वेदवेदांगपारगान् सदाचारान् स्वेष्टदेवतोपासकान्प्राग्गुरुवरणोक्तसामग्रीभिस्तथैव ऋत्विक्त्वेन वृणुयात्। चतुःकुंडपक्षे चत्वार एव ऋत्विजः कार्याः। ततः शिष्येणैवं वृतो गुरुः कृतनित्यकृत्यः समलंकृतः पंचवाद्यघोषपुरःसरं ब्राह्मणैः सुहृज्जनैश्च वृतः शिष्येण सह मंडपद्वारं गत्वा पादौ प्रक्षाल्याचम्य तत्कल्पोक्तविधिना द्वारपूजां विधाय तथैव भूतोत्सादनपूर्वकं मंडपांतःप्रविश्य वास्तुपुरुषपूजादिकं विधाय पंचगव्यार्घतोयाभ्यां मंडपाभ्यंतरं संप्रोक्ष्य वीक्षणादिचतुर्भिः संस्कारैः संस्कृत्य चंदनागुरुकर्पूरैर्वा दशांगधूपैर्मंडपं धूपयित्वा लाजचंदनसिद्धार्थभस्मदूर्वाकुशाक्षतात्मकानस्त्रमंत्रेण सप्तधाभिमंत्रितान्विकिरान्मंडपाभ्यंतरे विकीर्यास्त्रमंत्रेण कुशमुष्टिना तान्विकिरान्संमार्ज्यैकीकृत्येशानकोणे वर्धन्या

१ संभनं चतुरस्रं च मत्स्यं गोमुखमेव च। योनिमुद्रेति चाख्याता पंचमुद्राभिवादने॥ इति॥

आसनाय तत्संस्थाप्य ब्राह्मणैः पुण्याहं वाचयित्वा ब्राह्मणान्दक्षिणादिभिः परितोष्य गोमयोपलिप्तायां वेदिकायां पश्चिमतः स्वासनस्थानं परित्यज्य पूर्वभागे सुसमे भूतले देवतायंत्रं वा सर्वतोभद्रमंडलमुद्धरेत् ॥

तद्यथा—

तत्र प्राक्प्रत्यगायता दक्षिणोत्तरायताः सप्तदश रेखाः कृत्वा षट्पंचाशदुत्तरशतद्वयकोष्टयुतं चतुरस्रं मंडलं कृत्वा तन्मध्यगतषडिंशत्कोष्टान्येकीकृत्य तद्बहिश्चतुर्दिक्ष्वेकपंक्तिं परितः संमार्ज्यैकीकृत्य पीठं परिकल्प्य तद्बहिरपि चतुर्दिग्गतपंक्तिद्वयमेकीकृत्य संमार्ज्य वीथीं परिकल्प्य सर्वमध्यगतसरोजस्थाने बहिः परितो द्वादशमं विभागं परित्यज्य सर्वमध्यावलंबनेन समांतरालं वृत्तत्रयं संपाद्य तत्र सर्वमध्यवृत्तमध्यकर्णिकां परिकल्प्य तद्बहिर्गतवृत्तवीथीं केसरार्थं परिकल्प्य केसरस्थानं षोडशधा विभज्य चिह्नावलंबनेन द्वितीयतृतीयवृत्तयोरंतरालसूत्रमानेन गुरूक्तयुक्त्या षोडशार्धचंद्रान्परिकल्प्य तेनाष्टदलानि कृत्वा तृतीयवृत्ताद्बहिस्त्यक्तैकांशतो मध्यचिह्नावलंबेन वृत्तांतरं निष्पाद्य गुरूक्तयुक्त्या पत्राग्राणि विधायैकैकदलमूले केसरद्वयं यथा दृश्यते तथा विरच्य पद्मं कृत्वा पद्मबहिर्गतैकपंक्तिरूपचतुरस्रपीठस्य कोणचतुष्टयेऽपि कोष्ठत्रयेण पीठपादान्परिकल्प्यावशिष्टकोष्ठैरेकीभूतैः पीठगात्राणि विधाय तद्बहिर्गतपंक्तिद्वयकोष्टानि सम्यक् प्रमार्ज्य तद्बहिर्गतपंक्तेश्चतुर्दिक्षु मध्येमध्ये कोष्ठद्वयमेकीकृत्य सर्वबाह्यगतपंक्तेरपि चतुर्दिक्षु

प्रतिदिशं कोष्ठचतुष्टयमार्जनेन द्वारचतुष्टयं परिकल्प्य द्वार चतुष्टयस्यापि पार्श्वयोः पंक्तिद्वयगतकोष्ठेषु अंतःपंक्तेः को ष्ठत्रयं बहिःपंक्तेः कोष्ठमेकमिति कोष्ठचतुष्टयमेकीकृ शोभां विधाय तत्पार्श्वयोरप्यंतःपंक्तेः कोष्ठमेकं बहिःपं कोष्ठत्रयमिति कोष्ठचतुष्टयमेकीकृत्योपशोभाः परिकल्प्या शिष्टैः षड्भिः षड्भिः कोष्ठैश्चत्वारि कोष्ठानि परिकल्पयेदि सर्वतोभद्रमंडलं निर्माय, सरोजकर्णिकाकेसरदलदलाग्रपी वीथीद्वारशोभोपशोभाकोणस्थानानि पंचवर्णरजोभिर्भू येत्। पंचवर्णरजांसि तु हरिद्राचूर्णं पीतंरजः। तंदुलचू शुक्लंरजः। कुसुंभकुसुमचूर्णं रक्तंरजः। दग्धतंदुलचूर्णं कृ ष्णवर्णं। बिल्वपत्रचूर्णं श्याममिति। रजोविन्यासप्रकार सीमागताः सर्वारेखाः शुक्लरजसा एकांगुलोत्सेधविस्ता युताः कार्याः। पीतरजसा कमलकर्णिकां केसराणि च सम पूर्य। शुक्लरजसा दलानि च संपूर्य। श्यामरजसा दलसं धीनापूरयेत्। अथवा कर्णिकां पीतेन, केसरान्पीतरक्ताभ्यां दलानि रक्तेन, दलसंधीन् कृष्णेन रजसा संपूर्य। पीतेन कृष्णेन वा पीठगर्भमापूर्य। पीठपादान् रक्तेनापूर्य। पीठ गात्राणि शुभ्ररजसाऽपूर्य। वीथीचतुष्टये कल्पवल्लीः कौ कपुष्पपल्लवफलमंडिता नानावर्णरजोभिरारचय्य। शुभ्रे रजसा द्वारचतुष्कमापूर्य। रक्तवर्णेन द्वारशोभाः, पीतेनो पशोभाः, कृष्णेन कोणानि चापूर्य। तद्बही रेखात्रयमेकै कांगुलांतराले शुक्लरक्तकृष्णरजोभिः कुर्यादिति सर्वतोभ द्रमंडलम्।

विधाय तत्समीपे स्वासनस्थानं विधिवत्संशोध्य तत्र स्वासनमास्तीर्य विधिवत्संपूज्य तत्र प्राङ्मुखः पद्माद्यासनेनोपविश्य मौनी विजितेंद्रियस्तत्कल्पोक्तविधिना पूजाद्रव्याणि संपाद्य तथैव तानि संस्कृत्य वेदीं परितो घृतप्रज्वलितान्दीपान्संस्थाप्य तत्र दर्पणं चामरं छत्रं तालवृंतं मंगलांकुरपात्राणि दिक्षु स्थापयेत् । ततः कृतांजलिपुटो भूत्वा गुर्वादिवंदनपूर्वकं करशुद्धितालत्रयदिग्बंधनाग्निप्राकारत्रयप्राणायामत्रयऋष्यादिन्यासभूतशुद्धिप्राणप्रतिष्ठामातृकान्यासमंत्रन्यासतत्तत्कल्पोक्तन्यासपीठन्यासांश्च विधाय मुद्रादर्शनस्येष्टदेवताध्यानमानसपूजनमूलमंत्रजपतत्समर्पणार्घादिपात्रस्थापनांतर्हवनमूलमंत्रजपतत्समर्पणानि विधाय । ॐ सं सर्वतोभद्रमंडलायनमः इति गंधादिपंचोपचारैरभ्यर्च्य तत्कर्णिकामध्यं शालिभिरापूर्य तदुपरि तंडुलैरलंकृत्य तत्र दर्भानास्तीर्य साग्रान् दीर्घान्सप्तविंशतिदर्भानेकीकृत्याग्रप्रदेशे ब्रह्मग्रंथिं[1] विधाय कूर्चं कृत्वा गंधपुष्पाक्षतदूर्वायुतं तत्कूर्चं शालिपुंजोपरि निधाय तत्र तत्कल्पोक्तविधिना पीठपूजां विधाय, स्वर्णरौप्यताम्रमार्त्तिकमेषामन्यतमं षड्विंशदंगुलात्मकं, षोडशद्वादशांगुलात्मकं, वा विस्तारोन्नतिशालिनमस्त्राद्भिः क्षालितं, चंदनागुरुकर्पूरधूपितांतरं, शोभनाकृतिं, नीरंध्रं त्रिगुणात्मना तंतुनाऽवेष्टितांगं, गंधपुष्पाद्यैरर्चितं, कूर्चाक्षतसमन्वितं, मुक्तामाणिक्यवैदूर्यगोमेद-

१ मेरुतंत्रे प्रकाशे ६ त्रिरावृत्याथ मध्येन चार्धावृत्या तु देशतः । ग्रंथिः प्रदक्षिणावर्तः स ब्रह्मग्रंथिरुच्यते ।

वज्रविद्रुमपद्मरागमरकतनीलाख्यनवरत्नोदरं, कुंभं शालि पुंजोपरि, प्रणवमुच्चरन् संस्थाप्य, कुंभस्य प्रागर्चितयोग पीठस्य चैक्यं परिकल्प्यैकपंचाशद्वर्णौषधिक्काथतोयैः क्षीर द्रुमकषायेण पलाशत्वग्भवेन वा कर्पूरगंधपुष्पसुवासितै स्तीर्थोदकैर्वा स्वात्माभेदेन प्रत्यक्षरं सविंदुकां मातृकां प्रति लोमेन पठन्मूलविद्यामपि मूलमंत्रं वा प्रतिलोमतो जप न्देवताधिया, तं कुंभं पूरयेत् ॥ ततः स्वपुरतस्तत्कल्पोक्त सामान्यार्घविधिना शंखं संस्थाप्य तं कुंभपूरितसजातीय जलेनापूर्य तत्र तत्कल्पोक्तगंधाष्टकं विलोड्य तस्मिन् शंख जले वह्नेर्दशकलाः, सूर्यस्य द्वादशकलाः, सोमस्य षोडश कलाः, प्रणवोत्थैकपंचाशत्सृष्ट्यादिकलाश्चावाह्य, विधिव त्संपूज्य, तासां प्राणप्रतिष्ठां कुर्यात् ॥ तत्रादौ वह्नेर्दशकला आवाह्य पूजयेत् ॥ तद्यथा ॥ वह्नेर्धूम्रार्चिरादि दशकला इहागच्छत इह तिष्ठत इह सन्निधीभवतेत्यावाह्य ॥ ॐ धूम्रा र्चिरादिभ्य एष गंधो नमः ॥ इति पंचोपचारैरभ्यर्च्याऽसां प्रा णप्रतिष्ठां कुर्यात् । तद्यथा ॥ आं ह्रीं क्रों धूम्रार्चिरादि वह्नि दशकलानां प्राणा इह प्राणाः । आं० जीव इह स्थितः । आं० सर्वेंद्रियाणि ॥ आं० वाङ्मनश्चक्षुःश्रोत्रघ्राणप्राणा इहाग त्यसुखं चिरं तिष्ठंतु स्वाहा ॥ एवं सूर्यस्य तपिन्यादि द्वाद शकला आवाह्य प्राग्वत्संपूज्य प्राणप्रतिष्ठां कुर्यात् ॥ तथैव चंद्रस्याऽमृतादिषोडशकला आवाह्य प्राग्वत्संपूज्य प्राण प्रतिष्ठां कुर्यात् । ततोऽकाराद्ब्रह्मण उत्पन्नाः कचवर्गोत्थाः

सृष्ट्यादिदशकलाः पूर्ववदावाह्य ॥ ॐ हᳫंसः शुचिषद्वसुरंतरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ॥ नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् ॥ १ ॥ इति मंत्रं पठित्वा ॥ ॐ ब्रह्मणे नमः । इति संपूज्य तत्कलाः पूजयेत् । तद्यथा ॥ ॐ सृष्ट्यादिभ्य एष गंधोनमः ॥ इति पंचोपचारैरभ्यर्च्याऽसां प्राणप्रतिष्ठां कुर्यात् ॥ तत उकाराद्विष्णोरुत्पन्नाः टतवर्गोत्था जरादिदशकलाः पूर्ववदावाह्य ॥ ॐ प्रतद्विष्णुस्तवते वीर्येण मृगोन भीमः कुचरो गिरिष्ठाः । यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियंति भुवनानि विश्वा ॥ २ ॥ इति मंत्रं पठित्वा । ॐ विष्णवे नमः ॥ इति संपूज्य तत्कलाः पूजयेत् ॥

तद्यथा । ॐ जरादिभ्यएषगंधोनमः । इति पंचोपचारैरभ्यर्च्याऽसां प्राणप्रतिष्ठां कुर्यात् ॥ ततोमकाराद्रुद्रादुत्पन्नाः पयवर्गोत्थास्तीक्ष्णादिदशकलाः पूर्ववदावाह्य ॥ ॐ त्र्यंवकं यजामहे सुगंधिं पुष्टिवर्धनम् । उर्वारुकमिव बंधनान्मृत्योर्मुक्षीय मामृतात् ॥ १ ॥ इति मंत्रं पठित्वा ॥ ॐ रुद्राय नमः । इति संपूज्य तत्कलाः पूजयेत् । तद्यथा । ॐ तीक्ष्णादिभ्य एष गंधो नमः इति पंचोपचारैरभ्यर्च्याऽसां प्राणप्रतिष्ठां कुर्यात् । तत ईश्वराद्बिंदोरुत्पन्नाः षकारादिक्षकारांतपंचवर्णोत्थाः पीतादिपंचकलाः पूर्ववदावाह्य । ॐ गायत्रीमुच्चार्य ॐ ईश्वराय नमः इति संपूज्य तत्कलाः पूजयेत् ॥ तद्यथा ॥ ॐ पीतादिभ्य एष गंधो नमः ॥ इति पंचोपचारैरभ्यर्च्याऽसां प्राणप्रतिष्ठां कुर्यात् । ततो नादा-

त्सदाशिवादुत्पन्नाः स्वरजानिवृत्त्यादि षोडश कलाः पूर्ववदा
वाह्य ॐ विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु ॥ आसि
चतु प्रजापतिर्धाता गर्भं दधातु ते ॥ गर्भं धेहि सिनीवालि
गर्भं धेहि सरस्वति ॥ गर्भं ते अश्विनौ देवावाधत्तां पुष्कर
स्रजौ ॥ १ ॥ इति मंत्रं पठित्वा । ॐ सदाशिवाय नमः इति
संपूज्य तत्कलाः पूजयेत् ॥ तद्यथा ॥ ॐ निवृत्त्यादिभ्य ए
गंधो नमः ॥ इति पंचोपचारैरभ्यर्च्याऽसां प्राणप्रतिष्ठां कु
र्यात् । अत्र कलापूजने शक्तश्चेत्प्रत्येकमावाह्य पाद्यादिभि
पूजयेत् ॥ इत्थं चतुर्नवतिदेवताः शंखे संपूज्य सकलकला
त्मकं शंखस्थक्काथं मूलमंत्रेण कुंभजले निःक्षिप्य पनसाम्रा
श्वत्थवटवकुलपल्लवानि शतक्रतुलतया समाबध्य, कल्प
द्रुमधिया, कुंभवक्त्रे निधाय, तदुपरि कुंभसजातीयं तंदुल
पूर्णं नारिकेरफलान्वितं, चषकं, कल्पवृक्षफलधिया, संस्था
प्यारक्तपट्टवस्त्रयुग्मेन तं घटं संवेष्टयेदिति वेद्यां प्रधान
कुंभस्थापनं विधाय पूर्वादितोरणसमीपेषु प्रागुक्तमंडलेष्व
ष्टदलकमलेषु वा शालिपुंजोपरि प्रागुक्तविधिना प्रतिद्वार
मेकमेकं कुंभं संस्थाप्य तत्र पूर्वदिग्गतकुंभे ध्रुवं दक्षिणे धरं
पश्चिमे वाक्पतिमुत्तरे विघ्नेशं च संपूज्य ॥ तद्वन्मंडपस्या
ग्नेयादिकोणचतुष्टये कुंभान्संस्थाप्याऽग्नेयकुंभेऽमृतं, नैर्ऋत्ये
दुर्जयं, वायव्ये सिद्धार्थं, ईशाने मंगलं, च संपूज्य पुनः
पूर्वादिकुंभेष्विंद्रादिलोकपालानावाह्य वेदोक्ततत्तन्मंत्रेण सं
पूज्य पुनः पूर्वादिदिक्षु कुंभाद्बहिरैरावतं पुंडरीकं वामन
कुमुदांजनौ । पुष्पदंतं सार्वभौमं सुप्रतीकं च पूजयेदिति दि

ग्गजान्संपूज्य पुनर्गुरुर्वेद्यां गत्वा स्वासने समुपविश्य मूलेन प्राणायामत्रयं कृत्वा मूलमंत्रस्य ऋष्यादिकरषडंगन्यासान्विधाय स्वहृदि देवतां ध्यात्वा मानसैः पंचोपचारैः संपूज्य प्रधानकुंभोपरि यत्फलं तत्फलं कल्पवृक्षफलं ध्यायंस्तच्छायायां मूलेन मूर्तिं परिकल्प्य तत्र देवतामावाह्य तत्तत्कल्पोक्तविधिना षोडशोपचारैः सांगं सावरणं नैवेद्यांतं संपूज्य भुंजानां देवतां ध्यात्वा वेद्यां स्वदक्षिणभागे गोमयोपलिप्तभूतले हस्तमात्रविस्तारायाममंगुष्ठपर्वमात्रोच्चं वा वालुकाभिः समचतुरस्रं स्थंडिलं कृत्वा तत्र नित्यहोमोक्तविधिना वह्निं संस्कृत्य तत्र कुंभाद्देवतामावाह्य गंधादिभिः संपूज्य प्राग्वत्तारव्याहृतिभिराज्याहुतीर्हुत्वा सघृतेन पायसेन मूलमंत्रेण पंचविंशत्याहुतीः षडंगेन षडाहुतीश्च हुत्वा पुनर्महाव्याहृतिहोमांते देवतां संपूज्य कुंभस्थमूर्तौ संयोज्य विधिवद्वह्निमुद्रास्यावशिष्टेन हविषा तत्तत्कल्पोक्तवलिदानं विधायोत्तरापोशानादिनीराजनांतं नित्यपूजोक्तविधिना देवं संपूज्य विधिवत्तांवूलं निवेद्य प्राणायामत्रयर्ष्यादि करषडंगन्यासपूर्वकं मूलमंत्रमष्टोत्तरसहस्रं संजप्य देवतायै निवेद्य स्तुत्वा प्रणमेत् ॥

ततो मंडपस्येशानकोणे पूर्वसंचितविकिरपुंजोपरि तोयपूरितां हेमवस्त्रादिसंयुक्तां कर्करीं संस्थाप्य तस्यां सिंहस्थां खड्गखेटकधारिणीं घोररूपां पश्चिमास्यामस्त्रदेवतां ध्यात्वा तिष्ठँस्तां गंधादिपंचोपचारैः संपूज्य नमस्कृत्य तां कर्करीं कराभ्यामादाय श्रीपरदेवताज्ञयाऽस्मान् रक्षरक्षेति लोकपालानां देवताज्ञां श्रावयन् मंडपांतर्नालमुक्तोदकधारया प-

रिषिंचन्प्रदक्षिणं परिक्रम्यास्त्रमुच्चरन् यथास्थाने तां कर्क
निवेश्योपविश्य पुनस्तामस्त्रदेवतां पंचोपचारैः संपूज्य ततः
प्रागुक्तेषु कुंडेष्विंद्रेशानयोर्मध्यगतचतुरस्राचार्यकुंडे गुरु
ग्निस्थापनं कुर्यात् ॥

तत्रादौ गुरुः कुंडं गोमयेनोपलिप्य तत्समीपे विधि
त्स्वासनमास्तीर्य संपूज्य प्राङ्मुख उपविश्य मूलमंत्रेण प्रा
णायामत्रयं कृत्वा मूलमंत्रस्य ऋष्यादिकरषडंगन्यासानि
धाय देवतां ध्यात्वा मानसैः पंचोपचारैः संपूज्य स्वेष्टमं
यथाशक्ति जपित्वा जपं समर्प्य श्रीगुरुं प्रणम्य कुंडमष्टाद
शभिः संस्कारैः संस्कुर्यात् ।

तत्र मूलमंत्रं स्मरन् दिव्यदृष्ट्या कुंडं निरीक्ष्यास्त्रमंत्रे
कुशसलिलैरुत्तानहस्ताग्रेण प्रोक्ष्यास्त्रमंत्रेणैव कुशैस्त्रिः संता
ड्य कवचमंत्रेण विरलमुष्टिना जलैरभ्युक्ष्यास्त्रमंत्रेणैव कुं
डमध्ये किंचित्खननं कृत्वास्त्रेण तां मृदमंगुष्ठानामिकाभ्या
मुद्धृत्य वहिस्त्यक्त्वा हृन्मंत्रेण शुद्धमृत्तिकया तत्खातमापूर्य
स्त्रमंत्रेण तत्समीकृत्य कवचमंत्रेण जलैरासिंच्यास्त्रमंत्रे
फलकादिना कुट्टयित्वा दृढीकृत्य कवचमंत्रेण कुशैः संमार्ज्य
कवचेनैव गोमयाद्भिः संलिप्य कवचेनैव सोमसूर्याग्नीना
मष्टत्रिंशत्कलारूपं परिकल्प्य कवचेनैव त्रिसूत्रीकृतसूत्रैः
प्रतिमेखलं त्रिस्त्रिः संवेष्ट्य ॥ ॐ अमुककुंडायनमः । इ
कुंडं संपूज्यास्त्रेण कुंडं वज्रवद्दृढतरं संचिंत्य हृन्मंत्रेण कुंड
चतुर्दिक्षु वह्नेर्ज्वालाविलासाय मार्गचतुष्टयं कुशैः परि
ल्प्याच्छिन्नाग्रैः कुशैरस्त्राभिमंत्रितैः कवचमंत्रेण कुंडभि

गणं सर्वमाच्छादयेदित्यक्षपाटनं कुर्यात् ॥ एवमष्टादशभिः संस्कारैः कुंडं संस्कृत्य ॥ अथवा प्रथमोक्तैश्चतुर्भिरेव वीक्षणादिभिः संस्कृत्याग्निस्थापनं कुर्यात् ॥ स्थंडिले तु चतुःसंस्कारा एव कार्याः ॥ अत्र हृन्मंत्रकवचमंत्रास्तु न्यासोक्तरूपा ज्ञेयाः नतु नमःपदहुंपदमात्राः । ततः कुंडमध्यभूमौ कुशमूलेन दक्षिणमध्योत्तरेषु पश्चिमादिप्रागग्रास्तिस्रो रेखा हृदयमंत्रेण विलिख्य पुनः पश्चिममध्यपूर्वेषु दक्षिणादुत्तराग्रास्तिस्रो रेखास्तथैव विलिख्य प्रणवेनाभ्युक्ष्य प्रागग्ररेखासु दक्षिणरेखायां ॐ विष्णवेनमः । मध्यरेखायां ॐ ईश्वरायनमः । उत्तररेखायां ॐ इंद्रायनमः । उदगग्ररेखासु पश्चिमरेखायां ॐ ब्रह्मणेनमः । मध्यरेखायां ॐ यमायनमः । पूर्वरेखायां ॐ सोमायनमः ॥ इति रेखाधिदेवताः संपूज्य । अथवा षट्कोणवृत्तं त्रिकोणवृत्तमष्टदलं भूगृहं च विलिख्य तत्र विधिवद्वागीशीवागीश्वरयोः पीठपूजां कृत्वा तत्र वागीश्वरीमृतुस्नातां वागीश्वरं च कामोन्मत्तं विचिंत्य भुवनेश्वरीमंत्रेणावाहनादिपरमीकरणांतं तत्तन्मुद्रया विधायासनादिषोडशोपचारैः संपूज्य सूर्यकांतादिसंभूतं यद्वा श्रोत्रियद्विजगेहजं वह्निं स्वर्णादिपात्रेण, मृत्पात्रं चेन्नूतनेन, सजातीयेन पात्रांतरेण पिधाय कन्यया वा सुवासिन्या समानीतं गुरुरादायास्त्रमंत्रेणैकमंगारं तन्मध्यात्क्रव्यादांशं नैर्ऋत्यकोणे परित्यज्य शेषं देवांशं मूलेन पुरतः संस्थाप्य मूलेन वीक्ष्यास्त्रेण प्रोक्ष्यास्त्रेण कुशैः संताड्य कवचेनाभ्युक्ष्य तत्र स्वनाभिमंडले जठराग्निं संचिंत्य सुषुम्णावर्त्मना

ब्रह्मरंध्रस्थाग्नीषोमात्मकमहाबिंदुमध्यगतवैंदवाग्नौ तं जठ
राग्निं संयोज्य तौ पुनर्वंहन्नासापुटाध्वना निष्कास्य पार्थि
वाग्नौ संयोज्य, औदर्यवैंदवाग्निभ्यां भौमस्य वसोरैक्यं स
रन् रमितिवह्नौ चैतन्यं योजयित्वा तारेणाभिमंत्र्य वर्मि
धेनुमुद्रयामृतीकृत्यास्त्रेण संरक्ष्य कवचेनावगुंठ्य ॥ ॐ
वह्नयेनमः इति गंधादिभिः संपूज्य जानुभ्यामवनिं गत्वा त
त्पात्रं कराभ्यामादाय कुंडस्योपरि त्रिःप्रदक्षिणं परिभ्राम्य
देव्या योनौ शिववीजमिति ध्यायन्। स्वाभिमुखं कुंडमध्ये
प्रणवमुच्चरन् तमग्निं निःक्षिप्य मैथुनांतधिया देवदेव्योरा
चमनादिकं दत्वा ॥ ॐ चित्पिंगल हन २ दह २ पच २
सर्वज्ञाज्ञापय स्वाहा ॥ इति मंत्रमुच्चरन् मुखफूत्कृत्या तमग्नि
प्रज्वाल्य, काष्ठैः पटुकृत्य कृतांजलिस्तिष्ठन् ॥ ॐ अग्नि
प्रज्वलितं वंदे हुताशं जातवेदसम्। सुवर्णवर्णममलं समि
विश्वतोमुखम् ॥ इति ज्वलंतमग्निमुपस्थायोपविश्य वक्ष्य
माणवह्निमंत्रेण प्राणायामत्रयं कृत्वा ॥ अस्य श्रीवह्निमंत्रस्य
भृगुऋषिः, गायत्रीछंदः वह्निर्देवता, रंवीजं स्वाहाशक्तिः
दीक्षांगहोमे विनियोगः ॥ इति कृतांजलिरुक्त्वा ॥

अथ ऋष्यादिन्यासः ॥ ॐ भृगुऋषये नमः शिरसि।
ॐ गायत्रीछंदसे नमो मुखे ॥ ॐ वह्निदेवतायै नमो हृदि।
ॐ रंवीजाय नमो गुह्ये॥ ॐ स्वाहाशक्तये नमः पादयोः।
ॐ विनियोगायनमः सर्वांगे। अथ जिह्वान्यासः। लिं
ॐ स्रूं हिरण्यायैनमः, पायौ ॐ ष्रूं गगनायै०, शिरसि
ॐ रम्रूं रक्तायै०, वक्त्रे ॐ ब्म्रूं कृष्णायै०, घ्राणे ॐ ल्म्रूं सुप्रभा

यै०, नेत्रयोः ॐ स्प्रूं अतिरक्तायै०, सर्वांगे ॐ स्प्रूं बहुरूपायै०, इति सप्त जिह्वा विन्यस्य ॥ अथ जिह्वाधिपन्यासः ॥ ॐ देवेभ्योनमः लिंगे ॥ ॐ पितृभ्यो० पायौ ॥ ॐ गंधर्वेभ्यो० शिरसि ॥ ॐ यक्षेभ्यो० वक्रे ॥ ॐ नागेभ्यो० घ्राणे ॥ ॐ राक्षसेभ्यो० नेत्रयोः ॥ ॐ पिशाचेभ्यो० सर्वांगे ॥ अथ करन्यासः ॐ सहस्रार्चिषे अंगुष्ठाभ्यां नमः ॥ ॐ स्वस्तिपूर्णाय तर्जनीभ्यां स्वाहा ॥ ॐ उत्तिष्ठपुरुषाय मध्यमाभ्यां वषट् ॥ ॐ धूमव्यापिने अनामिकाभ्यां हुं ॥ ॐ सप्तजिह्वाय कनिष्ठाभ्यां वौषट् ॥ ॐ धनुर्धराय करतलकरपृष्ठाभ्यां फट् ॥ एवं हृदयादिषडंगेष्वपि विन्यसेत् ॥ अथ मूर्तिन्यासः ॥ ॐ अग्नये जातवेदसे नमो मूर्ध्नि ॥ ॐ अग्नये सप्तजिह्वाय नमो वामांसे ॥ ॐ अग्नये हव्यवाहनाय० वामपार्श्वे ॥ ॐ अग्नये अश्वोदरजाय० वामकट्यां ॥ ॐ अग्नये वैश्वानराय० लिंगे ॥ ॐ अग्नये कौमारतेजसे० दक्षकट्यां ॥ ॐ अग्नये विश्वमुखाय० दक्षपार्श्वे ॥ ॐ अग्नये देवमुखाय० दक्षांसे ॥ इति वह्नेरष्टमूर्तीर्विन्यस्य सप्तजिह्वामुद्रां बध्वा वक्ष्यमाणवह्निरूपं स्वात्मानं ध्यात्वा ॥

ततः स्रुक्स्रुवौ आज्यस्थालीं चरुस्थालीं प्रणीताप्रोक्षणीपात्रे, बाहुमात्रदीर्घमक्लिष्टत्वगऽव्रणमार्द्रमंगुष्ठमात्रस्थूलं पलाशवैकंकतकाश्मर्यवैल्वाद्यन्यतमं परिधित्रयं परिधिसजातीयं प्रादेशमात्रदैर्घ्यं कनिष्ठांगुलिमानस्थौल्यं समित्पंचकं, कुशान्पवित्रत्रयं, घृतं, गंधपुष्पादि पूजाद्रव्याणि, दध्यक्षतादि बलिद्रव्याणि च यागोपकरणानि संपाद्य, कुंड-

स्योत्तरभागे कुशास्तरे स्रुगादिषट्पात्राण्यधोमुखानि संस्था
प्यान्यानि द्रव्याणि च यथायथं निधाय प्रोक्षणीपात्रजले
पात्रादीनि प्रोक्ष्य स्रुक्स्रुवादीनि पात्राण्युत्तानीकृत्य प्रणी
तापात्रं प्रक्षाल्य स्वपुरतः कुशास्तरे निधाय शुद्धजलैरापू
तत्र गंधाक्षतान्निक्षिप्य प्रादेशमात्रं साग्रं कुशद्वयं मध्ये
ह्यग्रंथियुतं जलमध्ये उत्तराग्रं पवित्रं निधाय उत्तानहस्तद्व
यांगुष्ठानामिकाभ्यां पवित्राग्रमूले विधृत्याधोमुखौ हस्तौ कृ
त्वाऽस्त्रमंत्रेण तज्जलविंदुं पवित्रमध्येन भूमौ त्रिर्निक्षिपे
त्युत्पवनं विधाय, तत्र घृतविंदुं दत्वा तत्पात्रं कराभ्याम
मस्तकमुद्धृत्य कुंडस्योत्तरे कुशास्तरे निधाय तदुपरि प्राग
ग्रान्दर्भान्निक्षिपेत् ॥ इति प्रणीतापात्रं संस्थाप्य प्रोक्षणीपात्रं
प्रक्षाल्य स्वपुरतः कुशास्तरे निधाय शुद्धजलैरापूर्य तन्मध्ये
प्रणीतापात्रजलं पात्रांतरेणोद्धृत्य किंचिद्दत्वा प्राग्वत्पवित्रे
णोत्पवनं कृत्वा मूलमुच्चरन् तेनोदकेन सर्वाणि पात्राणि
होमद्रव्याणि पूजाद्रव्याणि च प्रोक्षयेदिति द्रव्यासादनं वि
धाय, तत्पात्रं त्रिभागजलपूर्णं कुंडस्योत्तरे प्रणीतापात्रस्य
पूर्वभागे कुशास्तरे संपाताज्यधारणाय स्थापयेत् ॥ ततः
प्राक्स्थापितप्रोक्षणीजलेनाग्निं मूलमंत्रेण परिषिच्य मध्य
मेखलोपरि गर्भरहितैश्चतुर्भिश्चतुर्भिर्दर्भैः प्राचीं दिशमारभ्य
प्राच्यामुत्तराग्रैरीशानादि अग्न्यंतं परिस्तीर्य पुनर्दक्षिणस्यां
प्रागग्रैः पूर्वपरिस्तरणमूलमग्रैराच्छादयन् पुरतः पश्चिमा
यामुत्तराग्रैर्दक्षिणपरिस्तरणमूलं मूलेनाच्छादयन् पुनरुत्तर
स्यां प्रागग्रैः पश्चिमपरिस्तरणाग्रं मूलेन पूर्वपरिस्तरणाग्रमग्रे

गाच्छादयन् परिस्तीर्य परिधित्रयमादाय सर्वतःस्थूलं पश्चिमे उत्तराग्रं ततः कनिष्ठं दक्षिणे पूर्वाग्रं पश्चिमपरिधेर्मूलोपरि मूलं यथा भवति तथा पुनस्ततोऽपि कनिष्ठमुत्तरस्यां पूर्वाग्रं पश्चिमपरिधेरग्रोपरिस्थमूलमिति परिस्तरणोपरि परिधित्रयं निक्षिपेत् ॥ अत्र पश्चिममेखलायां परिस्तरणपरिधिस्थानं योनिनालोर्ध्वमेखलयोरंतराले कार्यमिति ॥ ततः पश्चिमपरिधौ ॐ ब्रह्मणे नमः। दक्षिणपरिधौ ॐ विष्णवे नमः। उत्तरपरिधौ ॐ रुद्राय नमः। इति संपूजयेत् ॥ ततः शिष्यः स्वेष्टदेवतामंत्रदीक्षितं ब्राह्मणमाहूय कुंडस्य दक्षिणे भागे कुशासने समुपवेश्य ॥ ॐ अद्येत्यादि० अमुकप्रवरान्विताऽमुकगोत्रोत्पन्नोऽमुकवेदांतर्गतामुकशाखाध्यायी अमुकदेवशर्माहममुकप्रवरान्विताऽमुकगोत्रिणममुकवेदांतर्गतामुकशाखाध्यायिनममुकदेवशर्माणममुकीविद्या"वाऽमुकमंत्र"दीक्षांगभूतहोमकर्मणि कृताकृतावेक्षणाय ब्रह्मत्वेन त्वां वृणे। इति वस्त्रालंकारादिभिर्वृत्वा। ततस्तं गंधादिभिः पूजयेत्। ब्राह्मणालाभे कुशबटुकं वा संपूज्य वह्निमंत्रेणार्घपाद्याचमनीयमधुपर्कपात्राणि संस्थाप्य संस्कृत्य कुंडमध्ये षट्कोणगर्भितकर्णिकं सकेसरं चतुर्द्वारयुक्तचतुरस्रत्रयवेष्टितमष्टदलकमलं वह्नेः पूजापीठं विभाव्य विधिवन्मंडूकादिज्ञानात्मांतं योगपीठं संपूज्याष्टदलकेसरेषु स्वाग्रादिप्रादक्षिण्येन मध्यांतं ॥ ॐ पीतायै नमः ॥ ॐ श्वेतायै० ॥ ॐ अरुणायै० ॥ ॐ कृष्णायै० ॥ ॐ धूम्रायै० ॥ ॐ तीव्रायै ॥ ॐ विस्फुलिंगिन्यै० ॥ ॐ रुचिरायै० ॥ ॐ ज्वा-

लिन्यै० ॥ इति नवशक्तीः संपूज्य ॥ ॐ रं सर्वशक्तिक
मलासनायनमः ॥ इति समस्तं पीठमभ्यर्च्य तन्मध्ये
वह्निं ध्यायेत् ॥

अथाग्निध्यानम्—

इष्टं शक्तिं स्वस्तिकाभीतिमुच्चैर्दीर्घैर्दोर्भिर्धारयंतं जपाभम्
हेमाकल्पं पद्मसंस्थं त्रिनेत्रं ध्यायेद्वह्निं बद्धमौलिं जटाभिः

एवं ध्यात्वा स्थापनादिपरमीकरणांतं तत्तन्मुद्रया वि
धाय सप्तजिह्वामुद्रां प्रदर्श्य । वैश्वानरजातवेद इहावह लो
हिताक्ष सर्वकर्माणि साधय स्वाहा ॥ इति मंत्रेणासनादिपु
ष्पांतैरुपचारैर्वह्निं पूजयेत् ॥ अत्र वह्निपूजायामर्घादिकं वह्ने
स्तत्तदंगबुध्या कुंडाद्बहिः पात्रांतरे दद्यात् ॥ चंदनादीनि
वह्नावेव दद्यात् ॥ ततः षट्कोणे देवाग्रकोणमारभ्य म
ध्यांतं ॥ ॐ स्प्रूं हिरण्यायै नमः ॥ ॐ ष्प्रूं गगनायै० ॥ ॐ
श्प्रूं रक्तायै० ॥ ॐ व्प्रूं कृष्णायै० ॥ ॐ ल्प्रूं सुप्रभायै० ॥
ॐ य्प्रूं अतिरक्तायै० ॥ ॐ स्प्रूं बहुरूपायै नमः ॥ इति
सप्तजिह्वाः संपूज्याष्टदलकेसरेषु अग्नीशासुरवायव्यदेवाग्रे
चतुर्दिक्षु च ॥ ॐ सहस्रार्चिषे हृदयाय नमः ॥ ॐ स्वस्तिपू
र्णाय शिरसे नमः ॥ ॐ उत्तिष्ठपुरुषाय शिखायै नमः ॥ ॐ
धूमव्यापिने कवचाय नमः ॥ ॐ सप्तजिह्वाय नेत्रत्रयाय
नमः ॥ ॐ धनुर्धराय अस्त्राय नमः ॥ इति षडंगानि सं
पूज्याष्टदलेषु स्वाग्रादिप्रादक्षिण्येन ॥ ॐ अग्नये जातवेदसे
नमः ॥ ॐ अग्नये सप्तजिह्वाय नमः ॥ अग्नये हव्यवाह
नाय नमः ॥ ॐ अग्नये अश्वोदरजाय नमः ॥ ॐ अग्नये

वैश्वानराय नमः ॥ ॐ अग्नये कौमारतेजसे नमः ॥ ॐ अग्नये विश्वमुखाय नमः ॥ ॐ अग्नये देवमुखाय नमः ॥ इत्यष्टमूर्तीः संपूज्य चतुरस्रे प्रसिद्धदिक्षु प्रादक्षिण्येन ॥ ॐ लं इंद्राय नमः ॥ ॐ रं वह्नये नमः ॥ ॐ मं यमाय नमः ॥ ॐ क्षं निर्ऋतये नमः ॥ ॐ वं वरुणाय नमः ॥ ॐ यं वायवे नमः ॥ ॐ सं सोमाय नमः ॥ ॐ हं ईशानाय नमः ॥ ॐ ह्रीं अनंताय नमः ॥ ॐ आं ब्रह्मणे नमः ॥ इतींद्रादिदिक्पालान्संपूज्य, तद्बहिस्तदस्त्राणि पूजयेत् ॥ ॐ वं वज्राय नमः ॥ ॐ शं शक्तये नमः ॥ ॐ दं दंडाय नमः ॥ ॐ खं खड्गाय नमः ॥ ॐ पां पाशाय नमः ॥ ॐ अं अंकुशाय नमः ॥ ॐ गं गदायै नमः ॥ ॐ त्रिं त्रिशूलाय नमः ॥ ॐ चं चक्राय नमः ॥ ॐ पं पद्माय नमः ॥ इति तदस्त्राणि संपूज्य, पुनर्वह्निमंत्रेण वह्निं संपूज्य, धूपादिदत्वा, नैवेद्यमुत्सृज्याग्नावेव निक्षिप्य, विधिवदाचमनं दत्वा, तांबूलं वह्नावेव निवेद्याग्निं प्रणमेत् ॥

ततः कराभ्यां स्रुक्स्रुवावूर्ध्वमुखौ गृहीत्वा तावधोमुखावग्नौ त्रिः प्रताप्य कुशान्गृहीत्वा तयोरग्रं कुशाग्रै–र्मध्यं मध्यैर्मूलं मूलैरिति त्रिः संमार्ज्य, वामकरेणादाय, प्रोक्षणीजलेन दक्षिणकराग्रेण संप्रोक्ष्य, पुनरपि प्राग्वत्प्रताप्य, कुशानग्नौ प्रक्षिप्य, सूत्रत्रयेण संवेष्ट्य, गंधादिभिरभ्यर्च्य, स्वदक्षिणभागे कुशास्तरे स्थापयेत् ॥ ततः आज्यस्थालीमादायास्त्रमंत्रेण प्रक्षाल्य स्वपुरतः कुशास्तरे निधाय तदुपर्युत्तराग्रं प्रादेशमात्रं साग्रं मध्ये ब्रह्मग्रंथियुतं कुशद्वयरूपं प-

वित्रं निधाय, पात्रांतरस्थं दुर्गंधादिदूषणरहितं वीक्षणादि चतुर्भिः संस्कारैः संस्कृतमाज्यमाज्यस्थाल्यां निक्षिप्य, कुंडादंगारानुद्धृत्य, मेखलाया वहिर्वायव्यकोणे क्वचित्पात्रे वा भूमौ निक्षिप्य, तदुपरि हृन्मंत्रेणाज्यस्थालीं निधाय, दर्भद्वयमग्नौ संदीप्य, दग्धांशमाज्ये हृदा निक्षिप्यावशिष्टमग्नौ प्रक्षिप्य, पुनर्दर्भद्वयं प्रज्वाल्य, कवचेनाज्यस्थालीं परितः परिभ्राम्य, दग्धशेषमग्नौ निक्षिप्य, पुनर्दर्भद्वयं प्रज्वाल्यास्त्रमंत्रेणाज्ये प्रदर्श्य, दग्धशेषमग्नौ निक्षिप्याज्यस्थालीमंगारेभ्य उत्तरस्यामुत्तार्यांगारानग्नौ निक्षिप्य जलं स्पृश्य, स्वपुरतो दर्भेष्वाज्यस्थालीं निधाय, प्राग्वदस्त्रमंत्रेण पवित्रमध्येन घृते त्रिरुत्पवनं कृत्वा, हृदयमंत्रेण पवित्रमध्येन स्वाभिमुखं संप्लवनं कुर्यादिति तापनपवित्रीकरणाभिद्योतनोद्द्योतनोत्पवनसंप्लावनाख्यषट्संस्कारान्कृत्वाज्यस्थाल्यां प्रागग्रं पवित्रं निक्षिप्य, द्वौ भागौ कृत्वा दक्षिणभागं शुक्लपक्षं, वामभागं कृष्णपक्षं च परिकल्प्य पुनस्तत्रैव वामभागे इडां दक्षिणे पिंगलां मध्ये सुषुम्णामिति नाडीत्रयं संचिंत्य, स्रुवेण दक्षिणभागात्हृन्मंत्रेणाज्यमादाय ॐ अग्नये स्वाहेति वह्नेर्दक्षिणनेत्रे हुत्वेदमग्नये न ममेत्युद्देशत्यागं विधाय, पुनर्वामभागात्तथैवाज्यमादाय ॐ सोमायस्वाहेतिवह्नेर्वामनेत्रे हुत्वेदं सोमाय नममेत्युद्देशत्यागं कृत्वा, पुनस्तथैव मध्यादाज्यमादाय ॐ अग्नीषोमाभ्यां स्वाहेति वह्नेर्भाललोचने हुत्वेदमग्नीषोमाभ्यां नममेत्युद्देशत्यागं कृत्वा, पुनर्दक्षिणभागात्तथैवाज्यमादाय ॥

अग्नये स्विष्टकृते स्वाहेतिवह्नेर्मुखे हुत्वेदमग्नये स्विष्टकृते नममेत्युद्देशत्यागं कुर्यात् ॥ अत्र स्रुवलग्नं हुतशेषमाहुतिग्रहणस्थले पातयेत् ॥ अन्यत्र स्रुवलग्नं हुतशेषमाज्यं संपातधारणाय प्राक्स्थापितप्रोक्षणीपात्रे निक्षिपेत् ॥ सर्वत्रप्रागुक्तयुक्त्या तत्तन्नाम्नोद्देशत्यागं कुर्यात् ॥ इति वह्नेर्नेत्रवक्त्रोद्घाटनं विधाय ॥ स्रुवेणाज्यमादाय ॥ ॐ भूः स्वाहा इदमग्नये नमम ॥ ॐ भुवः स्वाहा इदं वायवे नमम ॥ ॐ स्वः स्वाहा इदं सूर्याय नमम ॥ ॐ भूर्भुवःस्वः स्वाहा इदं प्रजापतये नमम ॥ इति व्यस्तसमस्तमहाव्याहृतिभिर्हुत्वाग्निमंत्रेण वारत्रयं जुहुयात् ॥ यथा ॥ वैश्वानर जातवेद इहावह लोहिताक्ष सर्वकर्माणि साधय स्वाहा ॥ इति वह्निमंत्रेणाज्याहुतित्रयं हुत्वेदमग्नये नममेति प्रतिवारमुद्देशत्यागं कृत्वा गर्भाधानादिसंस्कारान्संपादयेत् ॥ तत्र प्रतिसंस्कारमष्टाष्टाज्याहुतयो होतव्याः ॥ यथा ॥ ॐ अग्नेर्गर्भाधानं संपादयामि स्वाहा ॥ इदमग्नये नमम ८ ॥ ॐ अग्नेः पुंसवनं सं० ८ ॥ ॐ अग्नेः सीमंतोन्नयनं सं० ८ ॥ ततो वागीश्वरीगर्भाज्जातं वह्निं प्रागुक्तरूपं ध्यायन् ॥ ॐ अग्नेर्जातकर्म सं० ८ ॥ ततो वह्नेर्नालच्छेदं कृत्वा सूतकं संशोध्य ॥ ॐ अग्नेर्नामकरणं सं० ८ ॥ ततः शिवाग्निरिति नाम परिकल्प्य ॐ अग्नेरुपनिष्क्रमणं सं० ८ ॥ ॐ अग्नेरन्नप्राशनं सं० ८ ॥ ॐ अग्नेश्चौलं सं० ८ ॥ ॐ अग्नेरुपनयनं सं० ८ ॥ ॐ अग्नेर्महानाम्न्यं सं० ८ ॥ ॐ अग्नेर्महाव्रतं सं० ८ ॥ ॐ अग्नेरुपनिषदं सं० ८ ॥ ॐ अग्नेर्गोदानं सं० ८ ॥

ॐ अग्नेः समावर्तनं सं० ८ ॥ अग्नेरुद्वाहं संपादयामिस्वा
हेतिप्रतिकर्माष्टावाज्याहुतीर्हुत्वा गर्भाधानाद्युद्वाहांतान्सं
स्कारान्विधाय वह्नेः पितरौ वागीश्वरीवागीश्वरौ प्राग्वत्सं
पूज्य स्वात्मनि विसृज्य मूलाग्रघृतसंप्लुतं समित्पंचकं तु
ष्णीं वह्नौ निक्षिपेत् ॥

ततोवह्नेर्जिह्वाद्यावरणदेवतानां प्रत्येकमेकैकाहुतिं जुहु
यात् ॥ तद्यथा ॥ ॐ स्प्रूं हिरण्यायै स्वाहा ॥ इदंहिरण्या
नमम ॥ ॐ ष्प्रूं गगनायै० ॥ ॐ श्प्रूं रक्तायै० ॥ ॐ व्प्रूं कृ
ष्णायै० ॥ ॐ ल्प्रूं सुप्रभायै० ॥ ॐ स्प्रूं वहुरूपायै० ॥ ॐ य
अतिरिक्तायै० ॥ ॐ सहस्रार्चिषे हृदयाय स्वाहा ॥ इदं सह
स्रार्चिषे नमम ॥ ॐ स्वस्तिपूर्णाय शिरसे० ॥ ॐ उत्तिष्ठपु
रुषाय शिखायै० ॥ ॐ धूमव्यापिने कवचाय० ॥ ॐ सप्त
जिह्वाय नेत्रत्रयाय० ॥ ॐ धनुर्धराय अस्त्राय० ॥ ॐ अ
ग्नये जातवेदसे स्वाहा ॥ इदमग्नये जातवेदसे नमम ॥ ॐ
अग्नये सप्तजिह्वाय० ॥ ॐ अग्नये हव्यवाहनाय० ॥ ॐ अ
ग्नये अश्वोदरजाय० ॥ ॐ अग्नये वैश्वानराय० ॥ ॐ अ
ग्नये कौमारतेजसे० ॥ ॐ अग्नये विश्वमुखाय० ॥ ॐ अ
ग्नये देवमुखाय० ॥ ॐ लं इंद्राय स्वाहा ॥ इदं इंद्राय नम
म ॥ ॐ रं वह्नये० ॥ ॐ मं यमाय० ॥ ॐ क्षं निर्ऋतये०
ॐ वं वरुणाय० ॥ ॐ यं वायवे० ॥ ॐ सं सोमाय०
ॐ ईं ईशानाय० ॥ ॐ ह्रीं अनंताय० ॥ ॐ आं ब्रह्मणे०
ॐ वं वज्राय स्वाहा ॥ इदं वज्रायनमम ॥ ॐ शं शक्तये०
ॐ दं दण्डाय० ॥ ॐ खं खड्गाय० ॥ ॐ पां पाशाय० ॥ ॐ

अंकुशाय० ॥ ॐ गं गदायै० ॥ ॐ त्रिं त्रिशूलाय० ॥ ॐ चं चक्राय० ॥ ॐ पं पद्माय ॥ इति वह्नेर्जिह्वांगावृत्तिदेवतानामेकैकामाज्याहुतिं हुत्वा स्रुवेणाज्यं स्रुचि चतुर्वारमापूर्याधोमुखस्रुवेण स्रुचं पिधायोत्थाय प्रागुक्तवह्निमंत्रांते वौषडिति वह्नौ हुत्वेदमग्नये नममेति त्यागं कृत्वोपविशेत् ॥ ततो दशधाविभक्तमहागणेशमंत्रेण जुहुयात् ॥ तद्यथा ॥ ॐ स्वाहा ॥ इदं गणेशाय नमम ॥ ॐ श्रीं स्वाहा० ॥ ॐ श्रीं ह्रीं स्वाहा० ॥ ॐ श्रीं ह्रीं क्लीं स्वाहा० ॥ ॐ श्रीं ह्रीं क्लीं ग्लौं स्वाहा० ॥ ॐ श्रीं ह्रीं क्लीं ग्लौं गं स्वाहा० ॥ ॐ श्रीं ह्रीं क्लीं ग्लौं गं गणपतये स्वाहा० ॥ ॐ श्रीं ह्रीं क्लीं ग्लौं गं गणपतये वरवरद स्वाहा० ॥ ॐ श्रीं ह्रीं क्लीं ग्लौं गं गणपतये वरवरद सर्वजनं मे वशय स्वाहा० ॥ ॐ श्रीं ह्रीं क्लीं ग्लौं गं गणपतये वरवरद सर्वजनं मे वशमानय स्वाहा० ॥ इति । दशधा विभक्तेन महागणपतिमंत्रेण दशाज्याहुतीर्हुत्वा ततः समस्तेन गणपतिमंत्रेण चतुर्वारमाज्येन जुहुयादित्यग्निस्थापनविधिः ॥

इत्यग्निं संस्थाप्य, नूतनां ताम्रादिनिर्मितां चरुस्थालीमस्त्रमंत्रेण प्रक्षाल्य पंचदशप्रसृतिमितान्मूलविद्यया वा मूलमंत्रेणाष्टधाभिमंत्रिताञ्छालिसंभूताँस्तंदुलानस्त्रमनुं जपन्निक्षिप्य तत्र यथामानं गोक्षीरं निक्षिप्य, प्रक्षालितेन पात्रेण कवचमंत्रमुच्चरन् तत्पात्रवदनं पिधाय, मूलमंत्रं स्मरन्प्राङ्मुखो गुरुश्चरुं पक्त्वा, तस्मिञ्छृते मूलमंत्रेण स्रुवेणाज्यं निक्षिप्य, कवचमंत्रेण तत्पात्रमुत्तार्य कुंडस्योत्तरभागे कुशा-

स्तरे निधाय, ततो गुरुः कुंडसमीपे गत्वा, स्वासने प्राङ्मुख
उपविश्य, मूलेन प्राणायामत्रयं कृत्वा, मूलमंत्रस्यर्ष्यादिक-
षडंगन्यासान्विधाय, विधिवद्ध्यानमानसपूजांतेऽर्घादिपात्र
स्थापनं कृत्वात्मपूजां विधाय, वह्निमुखे देवताचक्रं विभा
व्य, विधिवत्तत्पीठं संपूज्य, तत्र देवतामावाह्य, तत्कल्पो
क्तविधिना सांगं सावरणं सर्वोपचारैः संपूज्यार्घादिस्नानां
तानुपचारानग्निपूजावदेव कुंडाद्बहिः पात्रांतरे देवमुद्दिश्य
कल्पयेदन्यत्सर्वं कुंडमध्ये कल्पयेदिति॥ ततः कर्ता जलमा
दायामुकस्यामुकमंत्रदीक्षांगभूतहोमे मयेदमुपकल्पितं हवनी
यद्रव्यं या या यक्ष्यमाणदेवतास्ताभ्यस्ताभ्यो मया परित्यक्तं
नमम॥ ततो मूलमंत्रेण वह्निदेवतयोर्वक्त्रैकीकरणार्थं पंच
विंशत्याज्याहुतीर्हुत्वा॥ स्वात्माग्निदेवतानामैक्यं भावय
मूलेन नाडीसंधानार्थमेकादशाज्याहुतीर्हुत्वा षडंगावरण
देवतानामेकैकाज्याहुतिं हुत्वा, प्रागादिदिक्स्थाष्टसु कुंडे
ऋत्विग्भिः प्रागुक्तविधिना संस्कृतेष्वाचार्यः स्वकुंडादग्नि
मुद्धृत्योद्धृत्य विहरेत्॥ तत ऋत्विग्भिश्च स्वे स्वे कुंडे वह्नि
प्रज्वाल्य स्वकुंडाग्रे स्वस्वासनानि विधिना संपूज्योपविश्य
गुर्वादिवंदनपूर्वकं प्राणायामभूतशुद्ध्यादि यथाशक्ति न्यास
सजालं विधाय, वा वह्निं परिषेचनपरिस्तरणपरिधिप्रक्षेपण
पूजादिभिः सम्यक् परितोष्य तत्कल्पोक्तविधिनार्घादिस्था
पनं कृत्वा, वह्निमुखे स्वेष्टदेवताचक्रं ध्यात्वा, तत्पीठं सं
ज्य, तस्मिन्स्वेष्टदेवतां नित्यपूजोक्तविधिनाऽऽवाह्य सांगं
सावरणां सर्वोपचारैः संपूज्य, वक्त्रैकीकरणनाडीसंधानां

वरणहोमांतं कृत्वा, संस्कृतघृतेन पंचविंशत्याहुतीर्मूलविद्यया वा मूलमंत्रेण स्वे स्वे कुंडे जुहुयुः॥

ततो गुरुर्वेद्यामस्त्राभिमंत्रिते कुशास्तरे चरुं त्रिधा विभज्यैकं भागं देवतायै निवेद्य, वेदीं परितः पूर्वमंकुरार्पणकर्मणि कृतांकुरपात्राणि निक्षिप्य, घृतपूर्णपिष्टमयदीपाँश्च निधाय, चरोर्द्वितीयं भागं नवधा विभज्य, ऋत्विग्भिः सह साज्येन तेन प्रतिकुंडं पंचविंशत्याहुतीर्हुनेत्॥ ततो गुरुः सर्वतोभद्रमंडलस्य पूर्वादिवीथीचतुष्टये मेषादि-दिक्स्थानेषु प्राच्यां मेषवृषौ, आग्नेय्यां मिथुनं, दक्षिणे कर्कसिंहौ, नैर्ऋत्ये कन्यां, पश्चिमे तुलावृश्चिकौ, वायव्ये धनुः, उत्तरे मकरकुंभौ, ईशान्यां मीनं इति विभक्तेषु राशिस्थानेषु, तदधिपेभ्यो नक्षत्रेभ्यः करणेभ्यश्च हुतशेषपायसेन बलिं दद्यात्॥ यथा॥ कं ५ मेषवृश्चिकराश्यधिपतये मंगलायैष गंधाक्षतपुष्पयुक्तपायसबलिर्नमः॥ चं ५ वृषतुलाराश्यधिपतये शुक्रायै०॥ टं ५ मिथुनकन्याराश्यधिपतये बुधायै०॥ यं ४ कर्कराश्यधिपतये सोमायै०॥ अं १६ सिंहराश्यधिपतयेसूर्यायै०॥ तं ५ धनुर्मीनराश्यधिपतये बृहस्पतयेए०॥ पं ५ मकरकुंभराश्यधिपतये शनैश्चरायै०॥ पुनः क्रमेण मेषादिस्थानेषु मेषराश्यंशभूताश्विनीभरणीकृत्तिकापादनक्षत्रदेवताभ्यो दिवानक्तंचरेभ्यः सर्वेभ्यो भूतेभ्य एष गंधेत्यादिप्राग्वत्॥ एवं वृषराश्यंशभूतकृत्तिकापादत्रयरोहिणी मृगशिरोर्धनक्षत्रदेवेत्यादि॥ मिथुनराश्यंशभूतमृगशिरोत्तरार्धार्द्रापुनर्वसुपादत्रयनक्षत्रेत्यादि॥ एव-

मग्रेऽपि मंत्रा ऊहनीयाः ॥ ततो मीनमेषयोरंतराले ववक रणायैषगंधेत्यादिप्राग्वत् ॥ एवं वृषमिथुनयोर्मध्ये बालव करणायै० ॥ मिथुनकर्कटयोर्मध्ये कौलवकरणायै० ॥ सिं हकन्ययोर्मध्ये तैतिलकरणायै० ॥ कन्यातुलयोर्मध्ये गरक रणायै० ॥ वृश्चिकधनुषोर्मध्ये वणिजकरणायै० ॥ धनुर्मकरयो र्मध्ये विष्टिकरणायै० ॥ अत्र राशिद्वयाधिपतीनां राशिद्वय स्थानेऽपि बलिर्देय इति संप्रदायः ॥ ततो गुरुः कुंभस्थायै दे तायै उत्तरापोशनादिनीराजनांतं कृत्वा स्तुत्वा प्रणम्य क्षमा पयेत् ॥ ततश्चरोस्तृतीयं भागं शिष्येण सह गुरुः स्वयं भुक्त चांताय शिष्याय षडंगन्यासयोगेन सकलीकृताय नियता त्मने शिष्याय हृन्मंत्रेणाष्टधाऽभिमंत्रितं क्षीरवृक्षादिसंभ तालप्रमाणं दंतकाष्ठं दद्यात् ॥ ततः शिष्योपि तेन पूर्वो दंतधावनमंत्रं स्मरन् दंतान्विशोध्य दंतकाष्ठं प्रक्षाल्य वि ज्याचम्य गुरोः समीपं गच्छेत् ॥ ततो गुरुर्मूलमंत्रशिख बद्धेनास्त्रमंत्राभिरक्षितेन शिष्येण सार्धं तस्यां वेद्यां कुश स्तरे तस्यां रात्रौ शयनं कुर्यादित्यधिवासः ॥

इति श्रीसत्यानंदगुरुचरणप्रसादेन श्रीविष्णुभट्टविरचि तायां दीक्षाप्रकाशिकायां दीक्षाधिवासकथनं नाम सप्त प्रकाशः ॥ ७ ॥

---

## क्रियादीक्षाप्रकाशः ॥ ८ ॥

ततः सशिष्यगुरुर्ब्राह्मे मुहूर्ते चोत्थाय, कृतावश्यककर्म शिष्याय, मूलमंत्रेण सप्तधाभिमंत्रितं क्षीरवृक्षादिसंभ

तालप्रमाणं दंतकाष्ठं दत्वा, स्वयमपि दंतधावनं कारयेत्॥ शिष्योऽपि तेन पूर्वोक्तदंतधावनमंत्रं स्मरन्दंतान्विशोध्य, दंतधावनं प्रक्षाल्य, पुरतश्चतुरस्रे हस्तमात्रे स्थंडिले त्यक्त्वा मुखं प्रक्षालयेत्॥ ततो गुरुस्तत्परीक्षां कुर्यात्॥ तत्र शुभाशुभफलानि सारसंग्रहे—

ईशानाग्रे ज्ञानलाभः प्रागग्रे भूतिरुत्तमा।
आग्नेयाग्रे मनस्तापो बंधुनाशश्च दक्षिणे॥ १॥
राक्षसाग्रे मृत्युभयं वारुण्यग्रे मनःशुचः।
वायव्यग्रे व्यग्रता च कौबेराग्रे सुखावहः॥ २॥

ततः स्वप्नपरीक्षां कुर्यात्। श्रीकुलप्रकाशतंत्रे—

क्रूरस्वप्नेऽधमा दीक्षा ह्यक्रूरे मध्यमा मता।
उत्तमस्वप्नपूर्वा तु दीक्षा सर्वोत्तमा मता॥ १॥

ततो दंतकाष्ठे अमंगलदिगग्रपाते दुःस्वप्नदर्शने च प्रायश्चित्तं सारसंग्रह एव। "अमंगलस्थानपाते प्रायश्चित्तं समाचरेदिति"। प्रायश्चित्तं तु पूर्वोक्तं। ततो गुरुशिष्यौ स्नानादि नित्यकृत्यं निर्वर्त्य, यागमंडपं गत्वा, द्वारपूजादिनित्यक्रमोक्तविधिना कुंभस्थां परदेवतां सांगां सावरणां संपूज्य, जपांतं समाप्य, कुंडसमीपं गत्वा, स्वासनेषु समुपविश्य, गुरुश्च ऋत्विजश्च स्वे स्वे कुंडे परदेवतां यथाविधि संपूज्य, सघृतैस्तिलैस्तत्तत्कल्पोक्तपुरश्चरणांगहोमोक्तद्रव्यैर्वाष्टोत्तरसहस्रमष्टोत्तरशतं वा जुहुयुः॥ ततो गुरुः स्नातं कृतनित्यकृत्यं शिष्यं शूद्रातिरिक्तपंचगव्यं पाययित्वा कुंडसमीपं नीत्वा तं दिव्यदृष्ट्या विलोक्य, तस्य हृदयारविं-

दाज्जीवात्मानं भूतशुद्ध्युक्तपरिपाट्या, तद्देहाद्ब्रह्मरंध्रमार्गे-
न्निःसार्य स्वात्मनि योगबलेन गुरुरुक्तयुक्त्या संयोज्य, शि-
ष्यस्य षडध्वशोधनं कुर्यात् । तत्र शिष्यस्य पादयोर्नि-
वृत्तिः प्रतिष्ठा विद्या शांतिः शांत्यतीताचेति पंचकलात्मकं
कलाध्वानं संचिंत्य । ततस्तस्य लिंगप्रदेशे शिवशक्तिस-
दाशिवेश्वरशुद्धविद्यामायाकलाविद्या रागकालनियतिपुरुष-
प्रकृत्यहंकारबुद्धिमनःश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपाद-
पायूपस्थशब्दस्पर्शरूपरसगंधाकाशवाय्वग्निसलिलपृथिव्या-
त्मकषट्त्रिंशत्तत्त्वरूपं तत्त्वाध्वानं संचिंत्येति शिवदीक्षा-
याम् । वैष्णवदीक्षायां तु । जीवप्राणबुद्धिमनःश्रोत्रत्वक्च-
क्षुर्जिह्वाघ्राणवाक्पाणिपादपायूपस्थशब्दस्पर्शरूपरसगंधाका-
शवाय्वग्निसलिलपृथिवीवासुदेवसंकर्षणप्रद्युम्नानिरुद्धसोम-
सूर्याग्न्यात्मकद्वात्रिंशत्तत्त्वरूपं तत्त्वाध्वानं संचिंत्येति
सौरदीक्षायां तु । आकाशवायुतेजःसलिलभूमिशब्दस्पर्श-
रूपरसगंधश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायूपस्थम-
नोहंकारबुद्धिप्रकृत्यात्मकचतुर्विंशतितत्त्वरूपं तत्त्वाध्वानं
संचिंत्येति । शक्तिदीक्षायां तु । निवृत्तिप्रतिष्ठाविद्याशां-
तिशांत्यतीताव्योमरूपाशब्दशक्तिसदापूर्वशिवात्मकदशत-
त्त्वरूपं तत्त्वाध्वानं संचिंत्येति । त्रिपुरादीक्षायां तु । आ-
त्मविद्याशिवशिवविद्यात्मसर्वात्मकसप्ततत्त्वरूपं तत्वाध्वानं
संचिंत्य ॥ ततस्तस्य नाभौ अतलवितलसुतलमहातलत-
लातलरसातलपातालभूर्भुवःस्वर्महर्जनस्तपःसत्यलोकात्मकं

चतुर्दशभुवनरूपं भुवनाध्वानं संचिंत्य । ततस्तस्य हृदये अकारादिक्षकारांतवर्णकदंबरूपं वर्णाध्वानं विभाव्य । ततस्तस्य ललाटे वर्णसमुदायरूपं पदाध्वानं संस्मृत्य । ततस्तस्य शिरसि पदसमूहरूपसमस्तमंत्रराशिमयं मंत्राध्वानं ध्यायेदिति शिष्यशरीरेऽध्वषट्कं संचिंत्य, तं कूर्चेन स्पृशन् गुरुः स्वकुंडे ॥ ॐ अमुकस्य कलाध्वानं शोधयामि स्वाहा ॥ इति घृताक्तैस्तिलैरष्टधा हुत्वा, कलाध्वानं तत्त्वाध्वनि विलीनं विभाव्य ॥ ॐ अमुकस्य तत्त्वाध्वानं शोधयामि स्वाहेत्यष्टधा हुत्वा, तं भुवनाध्वनि विलीनं विभाव्य ॥ पुनः ॐ अमुकस्य भुवनाध्वानं शो० ॥ इत्यष्टधा हुत्वा भुवनाध्वानं वर्णाध्वनि विलीनं विभाव्य ॥ पुनः ॐ अमुकस्य वर्णाध्वानं शो० ॥ इत्यष्टधा हुत्वा तं पदाध्वनि विलीनं विभाव्य ॥ पुनः ॐ अमुकस्य पदाध्वानं शो० ॥ इत्यष्टधा हुत्वा तं मंत्राध्वनि विलीनं विभाव्य ॥ पुनः ॥ ॐ अमुकस्य मंत्राध्वानं शो० ॥ इत्यष्टधा हुत्वा तं ब्रह्मरंध्रस्थपरशिवे विलीनं विभाव्य पुनः संहृतिप्रतिलोमेन शिवसकाशान्मंत्राध्वानं सृष्ट्वा ततः पदाध्वानं तस्माद्वर्णाध्वानं ततो भुवनाध्वानं ततस्तत्त्वाध्वानं ततः कलाध्वानं च सृष्ट्वा तत्तत्स्थाने संस्थाप्य, शिष्यं दिव्यदृष्ट्या विलोक्य, स्वात्मनि स्थितं शिष्यचैतन्यं तद्धृदयारविंदे आवाहनोक्तप्रकारेण तद्ब्रह्मरंध्रेण संस्थापयेत् ॥

ततो गुरुः स्वकुंडे ॥ ॐ भूरग्नये च पृथिव्यै च महते च स्वाहा ॥ इदमग्नये नमम ॥ ॐ भुवो वायवे चांतरि-

क्षाय महते च स्वाहा ॥ इदं वायवे नमम ॥ ॐ सुवरादि
त्याय च दिवे च महते च स्वाहा ॥ इदमादित्याय नमम।
ॐ भूर्भुवःसुवश्चंद्रमसे च नक्षत्रेभ्यश्च दिग्भ्यश्च महते च
स्वाहा ॥ इदं प्रजापतये नमम ॥ इत्याज्याहुतिचतुष्टयं न्यू
नातिरिक्तप्रायश्चित्तार्थं हुत्वा ॥ इतः पूर्वं प्राणबुद्धिदेहध
र्माधिकारतोजाग्रत्स्वप्नसुषुप्त्यवस्थासु मनसा वाचा कर्मणा
हस्ताभ्यां पद्भ्यामुदरेण शिश्ना यत्स्मृतं यदुक्तं यत्कृतं
तत्सर्वं ब्रह्मार्पणं भवतु स्वाहा ॥ इति ब्रह्मार्पणमंत्रेण कर्मबं
धविमुक्त्यर्थमाज्येनाष्टाहुतीर्हुत्वा ॥ पुनर्वह्निमंत्रेण प्राग्व
दग्निं संपूज्य ॥

ॐ सहस्रार्चिर्महातेजा नमस्ते बहुरूपधृक् ।
सर्वाशिने सर्वगत पावकाय नमोस्तु ते ॥ १ ॥
त्वं रौद्रघोरकर्मा च घोरहा त्वं नमामि ते ।
विष्णुस्त्वं लोकपालोऽसि शांतिमत्र प्रयच्छ मे ॥ २ ॥

इत्यग्निं संप्रार्थ्य ॥ "न्यूनातिरिक्तपूर्णार्थं ददामि सघृ
तं तिलम्" ॥ ॐ हूंसांगं कुरुकुरु स्वाहेति तिलैरेकाहुतिं
हुत्वा ॥ स्रुवेण स्रुचि घृतमापूर्य तदग्रे कुशपुष्पपूगीफला
दिकं च निक्षिप्य तदूर्ध्वमधोमुखं स्रुवं निधाय शंखवत्सं
पुटाभ्यां कराभ्यां स्रुक्स्रुवौ गृहीत्वोत्थाय ऋजुकायस्तयो
र्मूलं स्वनाभौ निधाय वामपादमग्रे कृत्वा वौषडंतेन मूल
मंत्रेण देवतामुखकमले परमामृतबुद्ध्या जुहुयात् ॥ एवं पू
र्णाहुतित्रयं हुत्वोपविश्य प्राग्वद्देवतां संपूज्य सांगां साव
रणां वह्नेः सकाशादुद्वास्य कुंभे विसर्जयेत् ॥ एवमृत्वि

ज्ञोऽपि स्वस्वकुंडे महाव्याहृत्यादि होमपूर्वकं पूर्णाहुतिं हुत्वा देवतां संपूज्य विसर्जयेयुः ॥ ततो गुरुः प्रागुक्तविधिना वह्निं संपूज्य प्राग्वद्व्याहृत्यग्निजिह्वांगमूर्तिमंत्रैरेकैकाज्याहुतिं हुत्वा प्राग्वत्प्रोक्षणीजलैरग्निं परिषिच्य ॥

ॐ भोभो वह्ने महाशक्ते सर्वकर्मप्रसाधक ॥
कर्मान्तरेऽपि संप्राप्ते सन्निधिं कुरु सादरम् ॥ १ ॥

इत्यग्निं संप्रार्थ्य संहारमुद्रया तं स्वात्मनि संयोज्य, परिधीन्परिस्तरणानि च तूष्णीमग्नौ प्रक्षिप्य विभूतिवंदनं कृत्वा प्रणीतापात्रमुद्वास्य स्वपुरतः कुशास्तरे निधाय ॥ ॐ प्राच्यै दिशे नमः ॥ ॐ दक्षिणायै दिशे नमः ॥ ॐ प्रतीच्यै दिशे नमः ॥ ॐ उदीच्यै दिशे नमः ॥ इति तत्तद्दिशि प्रणीताजलमुत्क्षिप्याधरायै दिशे नम इति भूमौ जलं निक्षिप्य भूमौ पतितजलेन स्वात्मानं शिष्यं च कुशैः संप्रोक्षयेदिति प्रणीतोद्वासनं विधाय ब्रह्माणमुद्वासयेत् ॥ ब्रह्मस्थाने वृताय ब्राह्मणाय सहिरण्यं पूर्णपात्रं दापयेदिति दीक्षांगहोमविधिः ॥

ततो गुरुः नेत्रमंत्रेण शिष्यस्य नेत्रे नूतनपट्टवस्त्रेण बध्वा तं हस्तेन गृहीत्वा कुंभसमीपं नीत्वा तस्यांजलिं पुष्पैरापूर्य स्वयं मूलमंत्रमुच्चरन् घटस्थदेवतायै पुष्पांजलिं दापयित्वा, तस्य नेत्रबंधनं विमुच्य, कुशास्तरे तं समुपवेश्य ॥ "अज्ञानतिमिरांधस्य ज्ञानांजनशलाकया ॥ चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः" ॥ इति मंत्रं शिष्यं पा-

ठयित्वा कुंभस्थदेवतां सांगां सावरणां सर्वोपचारैः संपूज्य भूतशुद्धिविधिना तस्य देहं संहृत्य, संशोध्योत्पाद्य, तद्दे मूलमंत्रस्यर्ष्याद्यखिलन्यासजालं विन्यस्य, पुनः कुंभस्थदे वतां गंधादिपंचोपचारैः संपूज्य, मंडपद्वारदेवताः सलोक पालांगावरणदेवतार्घदेवता गणेशादिचतुरायतनदेवताः स्व स्वांगावरणदेवतासहिता देवस्यांगे विलीना इति विभाव्य, तां प्रागुक्तविधिना षडंगन्यासयोगेन, सकलीकृत्य, तेजो रूपतामापाद्य, तत्तेजोरूपं कलशजलं परब्रह्मरूपं संचिंत्य, वेद्या उत्तरे भागे कनिष्ठमंडपश्चेन्मंडपाद्बहिरुत्तरस्यां दिशि प्रागुक्तसर्वतोभद्रादिमंडले स्वलंकृतं शिष्यं प्राङ्मुखं समु पवेश्य, पंचवाद्यघोषपुरःसरं वेदघोषं कुर्वद्भिर्ऋत्विग्भि न्यैश्च ब्राह्मणैः सह गुरुः कुंभं समुद्धृत्य, तन्मुखस्थान्सु द्रुमाञ्छिष्यमूर्ध्नि निधाय विलोममातृकां मूलमंत्रं च जप न्पूर्वाभिमुखोपविष्टं तमुत्तराभिमुखस्तिष्ठन्नभिषिच्य पुनः पूर्व स्थापितामस्त्ररूपां वर्धनीं गृहीत्वा तत्तोयै रक्षार्थमभिषिच्य तद्वर्धन्यवशिष्टजलेन शिष्यमाचामयित्वा, देवतास्वरूपं तं षडंगन्यासेन सकलीकुर्यात् ॥ ततः शिष्य उत्थाय शुद्धे धौते नूतने वाससी परिधायाचम्य मौनी, कृतांजलिर्गुरु संनिधौ तिष्ठेत् ॥ ततो गुरुः प्राङ्मुखं तं प्रागुद्धृते सर्वतो भद्रमंडले समुपवेश्य, तस्मिन्संक्रांतां स्वेष्टदेवतां गंधादि पंचोपचारैः संपूज्य, शिष्यदेवतयोरैक्यं संभावयन् श्रीपा त्रामृतेन, तत्कल्पोक्तविधिना, गुरुः शिष्यस्य, तत्त्वशोधनं

कारयित्वा तस्य पाशच्छेदनं विदध्यात् ॥ ततो नूतनवस्त्रेण शिष्यमस्तकमाच्छाद्य, तस्य दक्षिणकर्णे प्रथमतोगुरुपादुकाविद्यामुपदिश्य तदनु गणेशसूर्यविष्णुशिवशक्त्यात्मकपंचायतनमंत्रानुपदिश्य तदनु ऋष्यादिसहितां मूलविद्यां यथाक्रमं यथासंप्रदायं यथाधिकारं त्रिवारं वदेत् ॥ ब्राह्मणश्चेत्तस्य हस्ते मंत्रदानरूपेणोदकं दत्वा पश्चात्कर्णे त्रिवारं वदेत् ॥ अन्येभ्यस्त्वेवमेव वदेत् ॥ स्त्रीशूद्रयोर्वामकर्णे वदेत् ॥

ततस्तस्य नामाद्यक्षरादिवर्णमानंदनाथशब्दांतं सुंदरं शिष्यनाम कुर्यात् ॥ "तदुक्तं दक्षिणामूर्तिसंहितायाम् ॥" "आद्याक्षरेण संलग्नं सुंदरं नाम कल्पयेत्" ॥ अथवा गतकलियुगदिनादि दीक्षादिना वसानानि दिनानि गणयित्वा नवभिर्हृते यावंति दिनान्यवशिष्टानि भवंति तानि परिज्ञाय नवनाथेषु दीक्षादिनस्य पर्यायो नाथो भवति तस्य नामैव स्वशिष्यस्य नाम कुर्यात् ॥ ततः शिष्यः प्राणायामत्रयऋष्यादिकरषडंगन्यासपूर्वकं, स्वगुरूपदिष्टां, मूलविद्यामष्टोत्तरशतवारमष्टाविंशतिवारमष्टधा वा जपित्वा, जपं समर्प्य, गुरुमंत्रदेवतामैक्यं विभावयन्देवतात्मकं श्रीगुरुं ध्यायन् दंडवत्प्रणम्य, तस्य पादद्वयं कृतार्थोऽस्मीति वदन् स्वशिरसि निधाय प्रणमेत् ॥ ततो गुरुः कृतार्थोऽसीति वदन् शिष्यमुत्थाप्य, परिरभ्य, मूर्ध्न्याघ्राय युगाक्षरादिपारंपर्यक्रममुपदिश्य, समयाचारादिकं, यथाधिकारं बोधयेत् ॥ ततः शिष्यः प्रहृष्टमनाः स्वात्मनिवेदनं कृत्वा, गुरवे सर्वस्वं

तदर्धं वा स्ववित्तदशमांशं, वा, वित्तशाठ्यरहितो, गोभूहि
रण्याम्बरगजाश्वदासदासीगृहारामादियुतां दक्षिणां दत्वा
ऋत्विग्भ्यश्च समग्रां दक्षिणां दत्वा, प्रणम्य, परितोष्य, कु
मारिकाः सुवासिनीः सामयिकाँश्च भक्ष्यभोज्यवस्त्रालंका
भूरिदक्षिणाद्यैस्तोषयेत् ॥ ततो गुरुनिकटे त्रिदिनं वसेत्
वा पूजादेशादिकृद्वसेदिति क्रियादीक्षा ॥

अथैवं विस्तरतः क्रियादीक्षां कर्तुमशक्तश्चेत्पूर्वोक्ते का
ष्ठमंडपे प्राग्वद्वेदिकायां मंडलं कृत्वा, तथैव तत्र कुंभस्था
पनं कृत्वा, ऋत्विग्वरणाशक्तौ क्वचित्प्रशस्ते गृहे, वा, शु
समे भूतले, प्राग्वन्मंडलं कृत्वा, तदशक्तौ, चतुरस्रवृ
वेष्टितमष्टदलकमलं वा निर्माय, तत्रोक्तविधिना कलशं सं
स्थाप्य, प्राग्वच्चतुरस्रकुंडं तदशक्तौ प्रागुक्तविधिना स्थंडि
कृत्वा तत्रोक्तविधिनाग्निं संस्थाप्याग्निस्थापने विस्ताराशक्तौ
नित्यहोमोक्तविधिना वाग्निं संस्थाप्योक्तविधिना होमादि
कृत्वाभिषिच्य मंत्रं दद्यात् ॥ पूर्वदिनाधिवासनाशक्तौ तस्मि
न्नेव दिने सद्योधिवासनं कृत्वा दिनद्वयकृत्यमेकस्मिन्
दिने समापयेदिति संक्षेपतः क्रियादीक्षा ॥ सद्योऽधिवास
नपक्षे गुरुशिष्ययोर्हुतशेषचरुप्राशनं न स्यात् किं तु प्राश
नस्यावश्यकत्वादाघ्राणं कार्यमिति शिष्टाचारः ॥ अत्र हो
काले वह्नेर्जिह्वाशिरःकर्णादिकं ज्ञात्वा जुहुयात् ॥ त
जिह्वायामेव होमः श्रेष्ठः ॥ अन्येष्वंगेषु दोषावहः ॥

तथाचोक्तं गुह्यकल्पे—

सर्वकार्यप्रसिद्ध्यर्थं जिह्वायां तस्य होमयेत् ।

चक्षुःकर्णादिकं ज्ञात्वा होमयेद्देशिकोत्तमः ॥ १ ॥
अग्निकर्णे हुतं यत्तु कुर्याच्चेद्व्याधितो भयम्।
नासिकायां महद्दुःखं चक्षुषोर्नाशनं भवेत् ॥ २ ॥
केशे दारिद्र्यदं प्रोक्तं तस्माज्जिह्वासु होमयेत्।
यत्र काष्ठं तत्र कर्णौ यत्र धूमस्तु नासिके ॥ ३ ॥
यत्राल्पज्वलनं नेत्रं यत्र भस्म तु तच्छिरः।
यत्रैव ज्वलितो वह्निस्तत्र जिह्वा प्रकीर्तितेति ॥ ४ ॥

शारदातिलकेऽपि—

वैश्वानरं स्थितं ध्यायेत्सर्वहोमेषु देशिकः।
शयानमाज्यहोमेषु निषण्णं शेषवस्तुषु ॥ १ ॥
आस्यांतर्जुहुयाद्वह्नेर्विपश्चित्सर्वकर्मसु।
कर्णहोमे भवेद्व्याधिर्नेत्रे त्वंधत्वमीरितम् ॥ २ ॥
नासिकायां मनःपीडा मस्तके धनसंक्षयः।
सधूमोऽग्निः शिरः प्रोक्तो निर्धूमश्चक्षुरेव च ॥ ३ ॥
ज्वलन्कृशो भवेत्कर्णः काष्ठलग्नश्च नासिका।
अग्निर्निजायते यत्र शुद्धस्फटिकसंनिभः ॥ ४ ॥
तन्मुखं तत्र विज्ञेयं चतुरंगुलमानत इति।

अथाग्नेर्वर्णाद्याः नारदपंचरात्रे—

अग्नेर्भासश्च गंधाश्च शब्दाश्चाकृतयस्तथा।
विकाराश्च शिखाश्चैव संवेद्याः कर्मसिद्धये ॥ १ ॥
पद्मरागद्युतिः श्रेष्ठो लाक्षारससमद्युतिः।
बालार्कवर्णो हुतभुक् जयार्थं शस्यते बुधैः ॥ २ ॥

इंद्रगोपकसंकाशः शोणिताभोऽथ पावकः।
शक्रचापनिभः श्रेष्ठः कुसुंभाभस्तथैव च ॥ ३ ॥
रक्तानां पुष्पजातीनां वर्णेनाग्निरिहोच्यते।

अथ गंधः—

सुगंधद्रव्यगंधोऽग्निर्घृतगंधः सुशोभनः ॥ ४ ॥
आयुर्दः पद्मगंधः स्याद्बिल्वगंधश्च सुव्रत !।
नागचंपकपुंनागपाटलायूथिकानिभः ॥ ५ ॥
पद्मेंदीवरकह्लारसर्पिर्गुग्गुलुसंनिभः।
पावकस्य शुभो गंधः इति।

अथ शब्दः—

जीमूतवल्लकीशंखमृदंगध्वनिसंनिभः।
शब्दोऽग्नेः सिद्धये हेतुरतोऽन्यः स्यादसिद्धिदः ॥ १

शारदातिलकेऽपि—

भेरीवारिदहस्तींद्रध्वनिर्वह्नेः शुभावह इति।

अथाकृतिर्नारदपंचरात्रे—

छत्राकारो द्विजश्रेष्ठ ! ध्वजचामरसंनिभः।
विमानानां हयानां च प्रासादानां वृषस्य च ॥ १ ॥
आकारेणाथ हंसानां मयूराणां च सिद्धिदः।
तथाकृतिः सदा वह्निः सद्यः सिद्धिकरः स्मृतः ॥ २ ॥
शेषाणां दंष्ट्रिणां रूपं न शस्तं होमकर्मणि।
यद्रूपं कथितं चैतद्यदि तस्य प्रदक्षिणम् ॥ ३ ॥
अन्योन्यत्वं प्रपद्येत तदा सिद्धिकरोऽनलः ॥ इति ॥

अथ शिखा तत्रैव—

विषमाश्च शिखावह्नेस्त्र्यादयः स्युः शुभावहाः ॥
ह्रस्वा ह्रस्वोन्नता दीर्घा ज्वालाग्नेः सिद्धिदा मताः ॥ १ ॥

शारदातिलकेऽपि—

प्रदक्षिणास्त्यक्तकंपाश्छत्राभाः शिखिनः शिखाः।
शुभदा यजमानस्य राज्यस्यापि विशेषतः ॥ १ ॥

तथा नारदपंचरात्रे—

प्रदीप्ते लेलिहानेऽग्नौ निर्धूमे सगुणे तथा।
हृष्टतुष्टिप्रदे चैव होतव्यं सिद्धिमिच्छता ॥ १ ॥
स्निग्धः प्रदक्षिणावर्तः सुशब्दश्चापि यो भवेत् ॥
नित्यमेकं शुभकरा यद्यन्यवर्जितैर्गुणैः ॥ २ ॥

अथ निषिद्धः नारदपंचरात्रे—

अल्पतेजाश्च रूक्षश्च विस्फुलिंगसमन्वितः।
धूमावलीढजालश्च कृशानुर्नैव सिद्धिदः ॥ १ ॥
दुर्गंधश्चावलीढश्च सितकृष्णश्च यो भवेत्।
भूमिं च विलिखेद्यस्तु सोऽपि दद्यात्पराभवम् ॥ २ ॥

शारदातिलकेऽपि—

कृष्णः कृष्णगतेर्वर्णो यजमानं विनाशयेत्।
पूतिगंधो हुतभुजो होतुर्दुःखप्रदो भवेत् ॥ १ ॥
छिन्ना वृत्ता शिखा कुर्यान्मृत्युं धनपरिक्षयम्।
शुकपक्षनिभो धूमः पारावतसमप्रभः ॥ २ ॥
हानिं तुरगजातीनां गवां च कुरुतेऽचिरात्।

तंत्रांतरेऽपि—

खरोष्ट्रमहिषादीनां वातमत्र निषिद्धये।

रूक्षश्चटचटाशब्दस्त्वपसव्यगतिः सदा ॥ १ ॥
उल्लिखेद्वसुधां यश्च यश्चाधःशिख एव च ।
नेष्यतेऽसौ मुनिश्रेष्ठ शास्त्रेऽस्मिन्पारमेश्वरे ॥ २ ॥

अत्रैवंविधेषु दोषेषु प्रायश्चित्तमुक्तं शारदातिलके—

एवंविधेषु दोषेषु प्रायश्चित्ताय देशिकः[1] ।
मूलेनाज्येन जुहुयात्पंचविंशतिमाहुतीरिति ॥ १ ॥
पंचविंशतिरेकैकस्मिन्दोषे इति ज्ञेयम् ।

अथ होमद्रव्यमानानि । तत्तु शारदातिलके—

अथात्र होमद्रव्याणां प्रमाणमभिधीयते ।
कर्षमात्रं घृतं होमे शुक्तिमात्रं पयः स्मृतम् ॥ १ ॥
उक्तानि पंचगव्यानि तत्समानि मनीषिभिः ।
तत्समं मधुदुग्धान्नमक्षमात्रमुदाहृतम् ॥ २ ॥
दधि प्रसृतिमात्रं स्याल्लाजाः स्युर्मुष्टिसंमिताः ।
पृथुकास्तत्प्रमाणाः स्युः सक्तवोऽपि तथोदिताः ॥ ३ ॥
गुडं पलार्धमानं स्याच्छर्करापि तथा स्मृता ।
ग्रासार्धं चरुमानं स्यादिक्षुः पर्वावधिः स्मृतः ॥ ४ ॥
एकैकं पत्रपुष्पाणि तथा यूथानि कल्पयेत् ।
कदलीनागरंगाणां फलान्येकैकशो विदुः ॥ ५ ॥
मातुलिंगं चतुःखंडं पनसं दशधा कृतम् ।
अष्टधा नारिकेलानि खंडितानि विदुर्बुधाः ॥ ६ ॥
त्रिधा कृतं फलं बैल्वं कपित्थं खंडितं द्विधा ।
उर्वारुकं फलं होमे चोदितं खंडितं त्रिधा ॥ ७ ॥

१ 'देवतारूपधारित्वाच्छिष्यानुग्रहकारणात् । करुणाकरमूर्तित्वाद्देशिकः कथितः प्रिये ॥'

फलान्यन्यान्यखंडानि समिधः स्युर्दशांगुलाः ।
दूर्वात्रयं समुद्दिष्टं गुडूची चतुरंगुला ॥ ८ ॥
व्रीहयो मुष्टिमात्राः स्युर्मुद्गा माषा यवा अपि ।
तंदुलाः स्युस्तदर्धांशाः कोद्रवा मुष्टिसंमिताः ॥ ९ ॥
गोधूमा रक्तकलमा विहिता मुष्टिमानतः ।
तिलाश्चुलुकमात्राः स्युः सर्षपास्तत्प्रमाणकाः ॥ १० ॥
शुक्तिप्रमाणं लवणं मरीचान्यपि विंशतिः ।
पुरं बदरमानं स्याद्रामठं तत्समं स्मृतम् ॥ ११ ॥
चंदनागुरुकर्पूरकस्तूरीकुंकुमानि च ।
तिंतिणीबीजमानानि समुद्दिष्टानि देशिकैः ॥ १२ ॥

अथ कर्षादिलक्षणमुक्तं सारसंग्रहे—

माषो दशगुंजा स्यात्षोडश माषो निगद्यते कर्ष इति । तैलस्याप्येतदेव परिमाणं । शुक्तिः कर्षद्वयं । प्रसृतिमात्रं पलद्वयमात्रं । मुष्टिः पलं । पलार्धं कर्षद्वयं । ग्रासार्धमशीतिरक्तिकामात्रम् । तदुक्तं पिंगलामते—

गुंजाभिर्दशभिर्माषः शाणो मासचतुष्टयम् ।
द्वौ शाणौ धटकः कोलो बदरं द्रक्षणश्च सः ॥ १ ॥
तौ द्वौ पाणितलं कर्षः सुवर्णं कवलग्रहः ।
पिचुर्बिडालपदकं तिंदुकोक्षश्च तद्द्वयम् ॥ २ ॥
शुक्तिरिष्टामिता ते द्वे पलं बिल्वं चतुर्थिका ।
मुष्टिराम्रं प्रगुंजोऽथ द्वे पले प्रसृतिस्तथेति ॥ ३ ॥
मातुलिंगं बीजपूरं । उर्वारुकं कर्कटी । तदर्धांशः शु-

क्थिताश्चुलुकमात्राः, पाणितलप्रमाणाः कर्षमात्रा इत्यर्थः
पुरं गुग्गुलु। बदरमानं अशीतिगुंजामितं। रामठं हिंगु

तथा नारदपंचरात्रे—

खंडत्रयं स्यान्मूलानां ह्रस्वानि स्वप्रमाणतः।

शैवागमेऽपि—

खंडत्रयं स्यान्मूलानां सूक्ष्माण्येवं तु होमयेत्।

एवमखंडमिति यावत्—

कंदानामष्टमं भागं लतानामंगुलद्वयमिति।

अथ समिधः नारदपंचरात्रे—

समित्प्रादेशमात्रेण समुच्छेदान्विता तथा।
विशीर्णा द्विदला ह्रस्वा वक्रा स्थूला कृशा द्विधा॥१
कृमिदष्टाश्च दीर्घाश्च निस्त्वचः परिवर्जिताः।
विशीर्णायुःक्षयं कुर्यात् द्विदला व्याधिसंभवः॥ २॥
ह्रस्वायां मृत्युमाप्नोति वक्रा विघ्नकरी मता।
स्थूला तु हरते लक्ष्मीं कृशायां जायते क्षयः॥ ३॥
द्विधायां नेत्रदोषाः स्युः कीटदष्टार्थनाशिनी।
द्वेषं प्रकुरुते दीर्घा प्राणघ्न्यो निस्त्वचः स्मृताः॥ ४॥
सक्षीरा नाधिका न्यूनाः समिधः सर्वकामदाः।
आर्द्रत्वचं महाच्छेदां तर्जन्यंगुलवर्तुलाम्॥ ५॥
ईदृशीं होमयेत्प्राज्ञः प्राप्नोति विपुलां श्रियम्।
श्रौते स्मार्ते च तंत्रोक्ते समिधः परिकीर्तिताः॥ ६॥

तथा वायवीयसंहितायाम्—

ताः पालाश्यः परा वापि यज्ञिया द्वादशांगुलाः।
अवक्रा अस्वयं शुष्काः सत्वचो निर्व्रणाः समाः॥ १॥

दशांगुला वा विहिताः कनिष्ठांगुलिसंमिताः ।
प्रादेशमात्रा वालाभे होतव्याः सकला अपि ॥ २ ॥

इति श्रीसत्यानंदनाथगुरुचरणप्रसादेन श्रीविष्णुभट्ट-विरचितायां दीक्षाप्रकाशिकायां क्रियादीक्षाकथनं नामाष्टमः प्रकाशः ॥ ८ ॥

---

## वर्णदीक्षाप्रकाशः ॥ ९ ॥

अथ प्रकृते क्रियादीक्षाऽशक्तानां वर्णदीक्षाविधिर्लिख्यते तत्र वर्णदीक्षा । यथा—

तत्र पुंप्रकृत्यात्मकानकारादिक्षकारांतान्मातृकावर्णान्पुंप्रकृत्यात्मके शिष्यदेहे यथोक्तविधिना विन्यस्य पुनः संहारक्रमेण मूर्धादिहृदयांतस्थं क्षकारं हृदयादिनाभ्यंतस्थे लकारे संहरामि हृदयादिनाभिपर्यंतस्थं, लकारं हृदयादिवामपादाग्रपर्यंतस्थे हकारे संहरामि, हृदयादिवामपादाग्रपर्यंतस्थं हकारं हृदयादिदक्षिणपादाग्रपर्यंतस्थे सकारे संहरामि, हृदयादिदक्षपादाग्रावधिस्थं सकारं हृदयादिवामपाण्यग्रावधिस्थे षकारे संहरामि, हृदयादिवामपाण्यग्रावधिस्थं षकारं हृदयादिदक्षिणपाण्यग्रावधिस्थे शकारे संहरामि । एवं युक्त्या शकारं वकारे संहरामीत्यादिमुखवृत्तस्थमाकारं शिरस्थे अकारे संहरामीत्यंतमुक्तयुक्त्यावर्णान्संहृत्य ततस्तच्चैतन्यं सकलतत्त्वग्रामसमेतं परमात्मनि संयोज्य विलीनसकलतत्त्वसमूहं विगतनिखिलकलुषं दिव्यतनुं शिष्यं संचिंत्य

पुनः परमात्मनः सकाशादकारादिक्षकारांतान्वर्णानुत्पा यथोक्तसृष्टिन्यासक्रमेण शिष्यदेहे मातृकावर्णान्विन्यस्य पुनस्तच्चैतन्यं तत्त्वग्रामसमेतं तस्मिन्संयोज्योक्तविधिनो देशं कुर्यात् । इति वर्णदीक्षा ॥

अथ कलादीक्षा । तत्र पादतो जानुपर्यंतं निवृत्तिकलां जानुतो नाभिपर्यंतं प्रतिष्ठाकलां । नाभितः कंठपर्यंतं विद्या कलां । कंठाल्ललाटपर्यंतं शांतिकलां । ललाटाद्ब्रह्मरंध्रां शांत्यतीतकलां च शिष्यदेहे संचिंत्य । निवृत्तिकलां प्रति ष्ठाकलायां संहरामि । प्रतिष्ठाकलां विद्याकलायां संहरामि विद्याकलां शांतिकलायां संहरामि । शांतिकलां शांत्यती तकलायां संहरामि । शांत्यतीतकलां परमात्मनि संहरामि इति क्रमात्संहृत्य वेधयित्वा पुनः परमात्मनः सकाशाच्छां त्यतीतकलां ततः शांतिं ततो विद्यां ततः प्रतिष्ठां ततः निवृत्तिं च सृष्टिक्रमेण शिष्यदेहे तत्तत्स्थाने संयोज्योपदे कुर्यात् । एवमष्टत्रिंशत्कलाभिर्वा एकपंचाशत्कलाभि प्रागुक्तयुक्त्या संहारसृष्टिन्यासक्रमेण शिष्यं संस्कृत्य दी द्यात् ॥ इति कलादीक्षा ॥

अथ स्पर्शदीक्षा । तत्र गुरुः स्वहस्ततले शिवरूपं स्व ध्यायन्मूलविद्यां षडंगमंत्रान्मातृकां च जपञ्छिष्यस्य शि सि स्वदक्षिणकरं निधायोपदिशेत् ॥ इतिस्पर्शदीक्षा ॥

अथ वाग्दीक्षा । तत्र गुरुः परचिद्रूपे शिवे चित्तं धाय तदुद्भूतान् समस्तमंत्रान्ध्यायँस्तन्मयः स्वयं शिष्य मंत्रानुपदिशेत् ॥ इति वाग्दीक्षा ॥

अथ दृग्दीक्षा ॥ तत्र गुरुः स्वनेत्रे निमील्य परमात्मस्वरूपिणीं मंत्रदेवतां ध्यात्वा प्रसन्नचित्तो दिव्यचक्षुषा शिष्यं निरीक्ष्य मंत्रोपदेशं कुर्यात् ॥ इति दृग्दीक्षा ॥ पश्चादुक्तमेतद्दीक्षात्रयं विरक्तानामशक्तानां शिष्याणां तत्त्वविदा गुरुणा कार्यमिति । स्त्रीणां तु वाग्दीक्षैव विहिता नान्या ।

अथ वेधदीक्षा । तत्र गुरुः शिष्यस्य मूलाधारे चतुर्दलपंकजमध्यगतत्रिकोणमध्ये यथोक्तरूपां कुंडलिनीं ध्यात्वा तत्पत्रचतुष्टयमध्यस्थं वादिसांताक्षरचतुष्टयं तन्मध्यस्थिते कमलासने संहृत्य तं ब्रह्माणं तदूर्ध्वगतस्वाधिष्ठानाख्यषट्पत्रकमलमध्यस्थिते विष्णौ संयोज्य वेधयित्वा तत्पत्रषट्कमध्यस्थं वादिसांतवर्णषट्कं च विष्णौ संयोज्य तदूर्ध्वे नाभिमंडले दशदलकमलात्मके मणिपूरचक्रे विष्णुं संयोज्य तत्पत्रदशकमलमध्यस्थं डादिफांतवर्णदशकसहितं विष्णुं तत्पंकजमध्यस्थे रुद्रे संयोज्य वेधयित्वा तं रुद्रमनाहताख्ये हृत्पद्मे कादिठांतद्वादशवर्णाढ्यद्वादशदलयुक्ते संयोज्य तैरक्षरैः सार्द्धं तं रुद्रं तन्मध्यस्थितेश्वरे संयोज्य वेधयित्वा कंठदेशे षोडशस्वराढ्यषोडशदलकमले विशुद्धिचक्रे तमीश्वरं संयोज्य तैः स्वरैः सार्धमीश्वरं तन्मध्यस्थे सदाशिवे संयोज्य वेधयित्वा तं सदाशिवं भ्रूमध्यस्थद्विदलकमलमाज्ञाचक्रं नीत्वा तत्पत्रद्वयस्थहक्षवर्णद्वयसहितं सदाशिवं च तन्मध्यवर्तिनि बिंदौ संयोज्य वेधयित्वा तं बिंदुं तदूर्ध्वस्थितायां कलायां संयोज्य तां पुनर्नादे नादं नादांते नादांतमुन्मन्यां तां विषुवक्रे विषुवक्रं गुरुवक्रे चेत्युत्तरोत्तरं

संयोज्य वेधयित्वा जीवात्मना सह तां कुंडलिनीं परशिवे संयोज्य वेधयेत् ॥ एवं कृते शिष्यो गुर्वाज्ञया छिन्नसंसारपाशः सद्यः क्षितितले पतति ॥ ततो गुरुः संहृतविपरीतक्रमेण परशिवात्कुंडलिनीमुत्पाद्य तया संहृतमखिलं सृष्टिक्रमेण शिष्यदेहे तत्तच्चक्रे तां तां देवतां संयोज्य हृदये जीवं मूलाधारे कुंडलिनीं च संयोज्योपदेशादिकं कुर्यात्। ततः शिष्यः संजातदिव्यबोधो भूतभविष्यवर्तमानज्ञः सदाशिवो भवति ॥ इति वेधदीक्षा ॥ प्रायः कलौ वेधदीक्षाकरो गुरुस्तद्योग्यः शिष्यश्च दुर्लभ इत्याहुराचार्याः ॥ प्रसंगादत्रापि लिखितेयम् ॥

इतिश्रीसत्यानंदनाथगुरुचरणप्रसादेन श्रीविष्णुभट्टविरचितायां वर्णदीक्षादिकथनं नाम नवमः प्रकाशः ॥ ९ ॥

---

## कलावतीदीक्षा ॥ १० ॥

अथ प्रकारांतरेण कलावतीदीक्षाप्रकाशो लिख्यते—

तत्र पूर्वमुपोषितः कृतनित्यक्रियः शिष्यः स्वस्तिवाचनपूर्वकं संकल्पं कुर्यात् तद्यथा ॥ ॐ अद्येत्यादि अमुकगोत्रः श्रीमानमुकदेवशर्मा धर्मार्थकाममोक्षप्राप्तिकामोऽमुकदेवताया अमुकमंत्रदीक्षामहं करिष्ये इति संकल्प्य गुरुं वृणुयात्। तद्यथा ॥ ॐ साधुभवानास्तां। ॐ साध्वहमासे ॥ ॐ अर्चयिष्यामो भवंतं ॥ ॐ अर्चय। ततो गंधपुष्पवस्त्रालंकारादिभिर्गुरुमभ्यर्च्य दक्षिणाजातं धृत्वा पठेत् ॥ ॐ अद्ये-

त्यादि अमुकगोत्रः श्रीमानमुकदेवशर्माऽमुकदेवतायामस्कर्त-
व्याऽमुकमंत्रदीक्षाकर्मणि श्रीमंतममुकगोत्रममुकदेवशर्माण-
मेभिः पाद्यादिभिरभ्यर्च्य गुरुत्वेन भवंतमहं वृणे ॥ ॐ वृतो-
ऽस्मीति प्रतिवचनं । यथाविहितं कर्म कुरु । यथाज्ञानतः
करवाणीति प्रतिवचनं । ततो गुरुराचम्य द्वारदेशे सामा-
न्यार्घ्यं कुर्यात् । तद्यथा । स्ववामे त्रिकोणवृत्तभूबिंबं वि-
लिख्य ॥ ॐ आधारशक्तये नमः । इति त्रिकोणं संपूज्य ।
तत्र क्षालितमाधारं निक्षिप्य फडिति मंत्रेणार्घ्यपात्रं प्रक्षाल्य
आधारोपरि संस्थाप्य नम इति मंत्रमुच्चरन् जलैः संपूर्य तत्र
ॐ गंगेचेति मंत्रेण सूर्यमंडलात्क्रोमित्यंकुशमुद्रया तीर्था-
न्यावाह्य ॐ इति गंधपुष्पाभ्यां संपूज्य वमिति धेनुमुद्रां
प्रदर्श्य प्रणवेनाष्टधाभिमंत्र्य तदुदके नास्त्रमंत्रेण द्वारमभ्युक्ष्य
द्वारदेवताः पूजयेत् । तद्यथा । ऊर्ध्वोदुंबरे ॥ ॐ गां गणे-
शाय नमः । वामशाखायां ॥ ॐ क्षां क्षेत्रपालाय नमः । द-
क्षिणशाखायां ॥ ॐ बां बटुकाय नमः । अधः ॥ ॐ यां यो-
गिनीभ्यो नमः । एवं वह्न्यादिकोणचतुष्टये ॥ ॐ गं गंगायै
नमः ॥ ॐ यं यमुनायै० ॥ ॐ श्रीं महालक्ष्म्यै० ॥ ॐ ऐं
सरस्वत्यै नमः—

इति संपूज्य । अशक्तश्चेत् ॐ द्वारदेवताभ्यो नमः ॥
वैष्णवे तु—

सुनंदो गुग्गुलुश्चैव प्रचंडो बलएव च ।
प्रबलो भद्रनामा च सुभद्रो विघ्ननाम च ॥
प्रणवादिनमोन्तेन नाममंत्रेण पूजयेत् ।

ततो दक्षिणपादपुरःसरं वामशाखां स्पृशन् दक्षिणांगं संकोचयन् मंडपांतं प्रविश्य। नैर्ऋत्यां ॥ ॐ वास्तुपुरुषाय नमः ॥ ॐ ब्रह्मणे नमः। ततोदेवमंत्रेण दिव्यदृष्ट्यावलोकना-द्दिव्यान्विघ्नानुत्सार्यास्त्राय फडिति जलेनांतरिक्षगान्विघ्ना-नुत्सार्य वामपादपार्ष्णिघातत्रयेण भौमान्विघ्नानुत्सारयेत्। ततः फडिति सप्तजप्ताल्लाजचंदनसिद्धार्थभस्मदूर्वांकुशाक्षता-त्मकान्विकरानादाय॥ ॐ अपसर्पंतु ते भूता ये भूता भुवि संस्थिताः। ये भूता विघ्नकर्तारस्ते नश्यंतु शिवाज्ञया॥ १॥ इत्यनेन तान्विकिरेत्। ततः ह्रीं आधारशक्तिकमलासनाय नमः। इत्यासनं संपूज्य॥ आसनमंत्रस्य मेरुपृष्ठऋषिः सुतलं छंदः कूर्मो देवता आसनपरिग्रहे विनियोगः॥ ॐ पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता। त्वं च धारय मां नित्यं पवित्रं कुरु चासनम्॥ १॥ इति पठित्वा स्वस्तिका-दिक्रमेणोपविशेत्। ततः पंचगव्येन मंडपं संशोध्य दक्षिणे पूजाद्रव्याणि वामे सुवासितांबुपूर्णकुंभं हस्तप्रक्षालनार्थं पात्रांतरं पृष्ठदेशे संस्थाप्य सर्वदिक्षुघृतप्रदीपान् दत्वा पुटांज-लिर्भूत्वा वामे॥ ॐ गुरुभ्यो नमः॥ ॐ परमगुरुभ्यो नमः॥ ॐ परात्परगुरुभ्यो नमः। दक्षिणे॥ ॐ गणेशाय नमः॥ मध्ये। अमुकदेवतायै नमः। ततः फडितिमंत्रेण गंधपुष्पा-भ्यां करौ संशोध्य ऊर्ध्वोर्ध्व तालत्रयं दत्वा छोटिकाभिर्दश-दिग्बंधनं कृत्वा रमिति जलधारयाऽग्निप्राकारं विचिंतयेत्। ततस्तत्कल्पोक्तप्राणायामादिमानसपूजांतं विधाय पात्राणि स्थापयेत्। तत्र शिवसूर्यार्चनं विना शंखस्थापनं कुर्यात्।

तद्यथा । स्ववामे त्रिकोणमंडलं कृत्वा तत्र त्रिपदिकामारोप्य फडिति शंखं प्रक्षाल्य तदुपरि संस्थाप्य नम इति मंत्रेण गंधपुष्पाक्षतदूर्वास्तत्र निक्षिप्य विमलजलेन विलोममातृकां मूलमंत्रं च जपन्संपूर्य ॥ ॐ मं वह्निमंडलाय दशकलात्मने नमः । इति त्रिपदिकायां ॥ ॐ अं सूर्यमंडलाय द्वादशकलात्मने नमः । इति शंखे ॥ ॐ उं सोममंडलाय षोडशकलात्मने नमः । इति जले संपूज्य ॥ ॐ गंगेचेतिमंत्रेण सूर्यमंडलात्क्रोमित्यंकुशमुद्रया तीर्थान्यावाह्य । अमुकि इहावह इह तिष्ठ स्वहृदयाद्देवतां तत्रावाह्य हुमित्यवगुंठ्य वषडिति गालिनीमुद्रां प्रदर्श्य वौषडिति तज्जलं वीक्ष्य पुनरंगमंत्रैः सकलीकृत्य गंधपुष्पाभ्यां तत्र देवतां संपूज्य मत्स्यमुद्रयाऽऽच्छाद्य तदुपरि मूलमंत्रमष्टधा संजप्य वमिति धेनुमुद्रां प्रदर्श्याऽस्त्रेण संरक्ष्य तस्मात्किंचिज्जलं प्रोक्षणीपात्रे निक्षिप्य तेनोदकेनात्मानं पूजोपकरणं चाभ्युक्ष्य पीठन्यासक्रमेण शरीरे धर्मादीन्पूजयेत् ॥ तद्यथा । दक्षस्कंधे ॐ धर्माय नमः ॥ वामस्कंधे ॐ ज्ञानाय नमः ॥ वामोरौ ॐ वैराग्याय नमः ॥ दक्षोरौ ॐ ऐश्वर्याय नमः ॥ मुखे ॐ अधर्माय नमः ॥ वामपार्श्वे ॐ अज्ञानाय नमः ॥ नाभौ ॐ अवैराग्याय नमः ॥ दक्षपार्श्वे ॐ अनैश्वर्याय नमः ॥ हृदये ॐ अनंताय नमः ॥ ॐ पद्माय नमः ॥ ॐ अं अर्कमंडलाय द्वादशकलात्मने नमः ॥ ॐ उं सोममंडलाय षोडशकलात्मने नमः ॥ ॐ मं वह्निमंडलाय दशकलात्मने नमः ॥ ॐ सं सत्त्वाय नमः ॥ ॐ रं रजसे नमः ॥ ॐ तं तमसे नमः ॥

ततो दक्षिणपादपुरःसरं वामशाखां स्पृशन् दक्षिणां संकोचयन् मंडपांतं प्रविश्य। नैर्ऋत्यां॥ ॐ वास्तुपुरुषाय नमः॥ ॐ ब्रह्मणे नमः। ततोदेवमंत्रेण दिव्यदृष्ट्यावलोकना द्दिव्यान्विघ्नानुत्सार्यास्त्राय फडिति जलेनांतरिक्षगान्विघ्नानुत्सार्य वामपादपार्ष्णिघातत्रयेण भौमान्विघ्नानुत्सारयेत्। ततः फडिति सप्तजसाल्लाजचंदनसिद्धार्थभस्मदूर्वांकुशाक्षतात्मकान्विकरानादाय॥ ॐ अपसर्पंतु ते भूता ये भूता भुवि संस्थिताः। ये भूता विघ्नकर्तारस्ते नश्यंतु शिवाज्ञया॥ १॥ इत्यनेन तान्विकिरेत्। ततः ह्रीं आधारशक्तिकमलासनाय नमः। इत्यासनं संपूज्य॥ आसनमंत्रस्य मेरुपृष्ठऋषिः सुतलं छंदः कूर्मो देवता आसनपरिग्रहे विनियोगः॥ ॐ पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता। त्वं च धारय मां नित्यं पवित्रं कुरु चासनम्॥ १॥ इति पठित्वा स्वस्तिकादिक्रमेणोपविशेत्। ततः पंचगव्येन मंडपं संशोध्य दक्षिणे पूजाद्रव्याणि वामे सुवासितांबुपूर्णकुंभं हस्तप्रक्षालनार्थं पात्रांतरं पृष्ठदेशे संस्थाप्य सर्वदिक्षुघृतप्रदीपान् दत्वा पुटांजलिर्भूत्वा वामे॥ ॐ गुरुभ्यो नमः॥ ॐ परमगुरुभ्यो नमः। ॐ परात्परगुरुभ्यो नमः। दक्षिणे॥ ॐ गणेशाय नमः। मध्ये। अमुकदेवतायै नमः। ततः फडितिमंत्रेण गंधपुष्पाभ्यां करौ संशोध्य ऊर्ध्वोर्ध्वं तालत्रयं दत्वा छोटिकाभिर्दशदिग्बंधनं कृत्वा रमिति जलधारयाऽग्निप्राकारं विचिंतयेत्। ततस्तत्कल्पोक्तप्राणायामादिमानसपूजांतं विधाय पात्राणि स्थापयेत्। तत्र शिवसूर्यार्चनं विना शंखस्थापनं कुर्यात्।

तद्यथा। स्ववामे त्रिकोणमंडलं कृत्वा तत्र त्रिपदिकामारोप्य फडिति शंखं प्रक्षाल्य तदुपरि संस्थाप्य नम इति मंत्रेण गंधपुष्पाक्षतदूर्वास्तत्र निक्षिप्य विमलजलेन विलोममातृकां मूलमंत्रं च जपन्संपूर्य॥ ॐ मं वह्निमंडलाय दशकलात्मने नमः। इति त्रिपदिकायां॥ ॐ अं सूर्यमंडलाय द्वादशकलात्मने नमः। इति शंखे॥ ॐ उं सोममंडलाय षोडशकलात्मने नमः। इति जले संपूज्य॥ ॐ गंगेचेतिमंत्रेण सूर्यमंडलात्क्रोमित्यंकुशमुद्रया तीर्थान्यावाह्य। अमुकि इहावह इह तिष्ठ स्वहृदयाद्देवतां तत्रावाह्य हुमित्यवगुंठ्य वषडिति गालिनीमुद्रां प्रदर्श्य वौषडिति तज्जलं वीक्ष्य पुनरंगमंत्रैः सकलीकृत्य गंधपुष्पाभ्यां तत्र देवतां संपूज्य मत्स्यमुद्रयाऽऽच्छाद्य तदुपरि मूलमंत्रमष्टधा संजप्य वमिति धेनुमुद्रां प्रदर्श्याऽस्त्रेण संरक्ष्य तस्मात्किंचिज्जलं प्रोक्षणीपात्रे निक्षिप्य तेनोदकेनात्मानं पूजोपकरणं चाभ्युक्ष्य पीठन्यासक्रमेण शरीरे धर्मादीन्पूजयेत्॥ तद्यथा। दक्षस्कंधे ॐ धर्माय नमः॥ वामस्कंधे ॐ ज्ञानाय नमः॥ वामोरौ ॐ वैराग्याय नमः॥ दक्षोरौ ॐ ऐश्वर्याय नमः॥ मुखे ॐ अधर्माय नमः॥ वामपार्श्वे ॐ अज्ञानाय नमः॥ नाभौ ॐ अवैराग्याय नमः॥ दक्षपार्श्वे ॐ अनैश्वर्याय नमः॥ हृदये ॐ अनंताय नमः॥ ॐ पद्माय नमः॥ ॐ अं अर्कमंडलाय द्वादशकलात्मने नमः॥ ॐ उं सोममंडलाय षोडशकलात्मने नमः॥ ॐ मं वह्निमंडलाय दशकलात्मने नमः॥ ॐ सं सत्त्वाय नमः॥ ॐ रं रजसे नमः॥ ॐ तं तमसे नमः॥

ॐ आं आत्मने नमः ॥ ॐ अं अंतरात्मने नमः ॥ ॐ परमात्मने नमः ॥ ॐ ह्रीं ज्ञानात्मने नमः ॥ ततो हृत्पद्मस्य पूर्वादिकेसरेषु पीठशक्तीः संपूज्य मध्ये पीठमनुं यजेत् ततो हृदये मूलदेवतां नैवेद्यं विना गंधाद्यैः संपूज्य ॥ उत्तमांगहृदयमूलाधारपादसर्वांगेषु मूलेन पंचपुष्पांजलिं दत्त्वा यथाशक्ति मंत्रं जप्त्वा गुह्यादिना जपं समर्पयेत् ॥ सर्वमेतत्प्रोक्षणीपात्रस्थेन वारिणा विदध्यात् ॥ ततः प्रोक्षण्यास्तोयं विसृज्य पूर्ववत्संपूज्य बहिः पूजामारभेत ॥

ततः पूर्वोक्तसर्वतोभद्रमंडलाद्यन्यतममंडलेषु पूजयेत् तद्यथा ॥ ॐ सं सर्वतोभद्रमंडलाय नमः ॥ इति मंडलं संपूज्य शालिभिः कर्णिकामापूर्य तदुपरि तंदुलानास्तीर्य विष्टरं चाक्षतसंयुक्तं तदुपरि न्यसेत् ॥ ततो मंडले तत्तत्कल्पोक्तविधिना पीठपूजां विधाय तत्र प्रादक्षिण्येन वह्नेः कलाः पूजयेत् ॥ तद्यथा ॥ ॐ यं धूम्रार्चिषे नमः ॥ ॐ रं ऊष्मायै नमः ॥ ॐ लं ज्वलिन्यै नमः ॥ ॐ वं ज्वालिन्यै नमः ॥ ॐ शं विस्फुलिंगिन्यै नमः ॥ ॐ षं सुश्रियै नमः ॥ ॐ सं सुरूपायै नमः ॥ ॐ हं कपिलायै नमः ॥ ॐ ळं हव्यवहायै नमः ॥ ॐ क्षं कव्यवहायै नमः ॥ इत्यक्षतैः पूजयेत् ॥ ततो हेमादिविरचितं कुंभं फडिति प्रक्षाल्य चंदनागरुकर्पूरैर्धूपयित्वा त्रिगुणात्मना तंतुना संवेष्ट्य ॐ कुंभाय नमः ॥ इति गंधपुष्पाभ्यां संपूज्य विष्टराक्षतं नवरत्नानि च निक्षिप्य प्रणवमुच्चरन् कुंभपीठयोरैक्यं विभाव्य पीठे स्थापयेत् ॥ ततः कुंभे प्रादक्षिण्येन सूर्यस्य द्वादशकलाः पूज-

येत् ॥ तद्यथा ॥ ॐ कं भं तपिन्यै नमः ॥ ॐ खं वं तापिन्यै नमः ॥ ॐ गं फं धूम्रायै नमः ॥ ॐ घं पं मरीच्यै नमः ॥ ॐ ङं नं ज्वालिन्यै नमः ॥ ॐ चं धं रुच्यै नमः ॥ ॐ छं दं सुषुम्णायै नमः ॥ ॐ जं थं भोगदायै नमः ॥ ॐ झं तं विश्वायै नमः ॥ ॐ ञं णं बोधिन्यै नमः ॥ ॐ टं ढं धारिण्यै नमः ॥ ॐ ठं डं क्षमायै नमः ॥ ॐ इत्यक्षतैः संपूज्य ॥ ततः क्षीरद्रुमकषायेण पलाशत्वग्भवेन वा तीर्थोदकैर्वा गंधपुष्पसुवासितजलैर्वात्माभेदेन मातृकां मंत्रं च प्रतिलोमतो जपन्देवताधिया कुंभं पूरयेत् ॥ ततो जले प्रादक्षिण्येन सोमस्य षोडशकलाः पूजयेत् ॥ तद्यथा ॥ ॐ अं अमृतायै नमः ॥ ॐ आं मानदायै नमः ॥ ॐ इं पूषायै नमः ॥ ॐ ईं तुष्ट्यै नमः ॥ ॐ उं पुष्ट्यै नमः ॥ ॐ ऊं रत्यै नमः ॥ ॐ ऋं धृत्यै नमः ॥ ॐ ॠं शशिन्यै नमः ॥ ॐ ऌं चंद्रिकायै नमः ॥ ॐ ॡं कांत्यै नमः ॥ ॐ एं ज्योत्स्नायै नमः ॥ ॐ ऐं श्रियै नमः ॥ ॐ ओं प्रीत्यै नमः ॥ ॐ औं अंगदायै नमः ॥ ॐ अं पूर्णायै नमः ॥ ॐ अः पूर्णामृतायै नमः ॥ इत्यक्षतैः पूजयेत् ॥

ततः शंखांतरं क्षीरद्रुमकषायादिद्रव्यैरापूर्य गंधाष्टकं विलोड्य तस्मिञ्जले सकलाः कला आवाह्य पूजयेत् । तत्रादौ वह्नेर्दशकला आवाह्य पूजयेत् । तद्यथा । वह्नेर्धूम्रार्चिरादिदशकला इहागच्छत इह तिष्ठत इह सन्निधीभवत । ततो मूलमंत्रं प्रतिलोमतो जपन्मंत्रस्य देवतां ध्यायन्नासां प्राणप्रतिष्ठां कुर्यात् । तद्यथा । ॐ आं ह्रीं क्रों हंसः धूम्रार्चिरादिवह्निदशकलानां प्राणा इह प्राणाः । एवं जीव इह स्थितः । एवंस-

वेंद्रियाणि ॥ एवं वाङ्मनश्चक्षुःश्रोत्रघ्राणप्राणा इहाग सुखं चिरं तिष्ठंतु स्वाहा ॥ इति प्राणान्प्रतिष्ठाप्य गंधादि भिः पूजयेत् । तद्यथा ॥ ॐ धूम्रार्चिरादिभ्य एष गंधो नमः इत्यादिपंचोपचारैः पूजयेत् । शक्तश्चेत्प्रत्येकमावाह्य पाद्या दिभिः पूजयेत् । ततः सूर्यस्य तपिन्यादिद्वादशकला आवा पूजयेत् । तद्यथा । सूर्यस्य तपिन्यादि द्वादशकला इहा च्छत इह तिष्ठत इह सन्निधीभवत । ततो मूलमंत्रं प्रतिलो मतो जपन्मंत्रस्य देवतां ध्यायन्नासां प्राणप्रतिष्ठां कुर्यात् तद्यथा । ॐ आंह्रींक्रौंहंसः तपिन्यादिसूर्यद्वादशकला प्राणा इह प्राणाः । एवं जीव इह स्थितः । एवं सर्वेंद्रियाणि एवं वाङ्मनश्चक्षुःश्रोत्रघ्राणप्राणा इहागत्य सुखं चिरं तिष्ठं स्वाहा । इति प्राणान्प्रतिष्ठाप्य गंधादिभिः पूजयेत् । तद्य ॥ ॐ तपिन्यादिभ्य एष गंधो नमः । इत्यादिपंचोपचा पूजयेत् । शक्तश्चेत्प्रत्येकमावाह्य पाद्यादिभिः पूजयेत् । त श्चंद्रस्यामृतादिषोडशकला आवाह्य पूजयेत् । तद्यथा । चंद्र स्यामृतादिषोडशकला इहागच्छत इह तिष्ठत इह सन्निधी भवत । ततो मूलमंत्रं प्रतिलोमतो जपन्मंत्रस्य देवतां ध्याय न्नासां प्राणप्रतिष्ठां कुर्यात् । तद्यथा । ॐ आंह्रींक्रौंहंसः अमृ तादिचंद्रषोडशकलानां प्राणा इह प्राणाः । एवं जीव इहस्थि तः । एवं सर्वेंद्रियाणि । एवं वाङ्मनश्चक्षुःश्रोत्रघ्राणप्रा इहागत्य सुखं चिरं तिष्ठंतु स्वाहा । इति प्राणान्प्रतिष्ठाप्य गंधा दिभिः पूजयेत् । तद्यथा ॥ ॐ अमृतादिभ्य एष गंधो नमः इत्यादिपंचोपचारैः पूजयेत् । शक्तश्चेत्प्रत्येकमावाह्य पाद्या

दिभिः पूजयेत् । ततः सृष्ट्यादिपंचाशत्कला आवाह्य पूजयेत् । तद्यथा । सृष्ट्यादिकचवर्गदशकलाः पूर्ववदावाह्य प्राणप्रतिष्ठां कृत्वा पूजयेत् ॥ ततः ॐ हꣳसः शुचिषद्वसुरंतरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जागोजा ऋतजा अद्रिजा ऋतं बृहत् ॥ इति मंत्रं जप्त्वा चावाह्य पूजयेत् । ततो जरादिटतवर्गदशकलाः पूर्ववदावाह्य प्राणप्रतिष्ठां कृत्वा पूजयेत् । ततः ॐ प्रतद्विष्णुस्तवते वीर्येण मृगोन भीमः कुचरो गिरिष्ठाः ॥ यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियंति भुवनानि विश्वा ॥ १ ॥ इति मंत्रं जप्त्वा चावाह्य पूजयेत् । ततस्तीक्ष्णादिपयवर्गदशकलाः पूर्ववदावाह्य प्राणप्रतिष्ठां कृत्वा पूजयेत् । ततः ॐ त्र्यंबकं यजामहे सुगंधिं पुष्टिवर्धनम् । उर्वारुकमिव बंधनान्मृत्योर्मुक्षीय मामृतात् ॥ १ ॥ इति मंत्रं जप्त्वा चावाह्य पूजयेत् ॥ ततः पीतादिषवर्गपंचकलाः पूर्ववदावाह्य प्राणप्रतिष्ठां कृत्वा पूजयेत् । ततः ॐ तद्विष्णोः परमं पदꣳ सदा पश्यंति सूरयः । दिवीव चक्षुराततम् ॥ १ ॥ इति मंत्रं जप्त्वा चावाह्य पूजयेत् ॥ ततो निवृत्त्यादिस्वरषोडशकलाः पूर्ववदावाह्य प्राणप्रतिष्ठां कृत्वा पूजयेत् । ततः ॐतद्विप्रासो विपन्यवो जागृवांसः समिंधते । विष्णोर्यत्परमं पदम् ॥ ॐ विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु । आसिंचतु प्रजापतिर्धाता गर्भं दधातु ते । गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति । गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजौ ॥ १ ॥ इति मंत्रं

जप्त्वा चावाह्य पूजयेत् । अत्र शक्तश्चेत्प्रत्येकमावाह्य पाद्या-
दिभिः पूजयेत् ॥

इत्थं चतुर्नवतिदेवताः शंखे संपूज्य ॥ ततः कलात्मकं
तच्छंखस्थं क्वाथं कुंभे निक्षिपेत् ॥ ततोऽश्वत्थवटबकुलपनस-
चूतपल्लवैरिंद्रवल्लीवेष्टितैः कल्पवृक्षबुद्ध्या कुंभवक्त्रं पिधाय त-
स्मिन्कुंभवक्त्रे सफलाक्षतचषकं कल्पवृक्षफलबुद्ध्या स्थापयेत्
ततः कुंभं निर्मलेन क्षौमयुग्मेन संवेष्ट्य मूलेन कुंभे मूर्तिं संक-
ल्प्य यथोक्तरूपेण देवतां ध्यात्वावाह्य तत्तत्कल्पोक्तविधिना
षोडशोपचारैः सांगां सावरणां नैवेद्यांतां संपूज्य भुंजानां देव-
तां ध्यात्वा वेद्यां स्वदक्षिणभागे गोमयोपलिप्तभूतले हस्त-
मात्रविस्तारायाममंगुष्ठपर्वमात्रोच्चमंगुष्ठमात्रोच्चं वा वालुकाभिः
समचतुरस्रं स्थंडिलं कृत्वा तत्र तत्कल्पोक्तनित्यहोमविधिना
वह्निं संस्कृत्य तत्र घटाद्देवतामावाह्य गंधादिभिः संपूज्य
वह्निदेवतयोरैक्यं संभावयन्महाव्याहृतिभिराज्याहुतीर्हुत्वा
मूलेन पंचविंशतिराज्याहुतीर्हुत्वा तत्तत्कल्पोक्तपुरश्चरणांग-
होमोक्तद्रव्यैरष्टोत्तरसहस्रमष्टोत्तरशतं वा हुत्वा पुनर्महाव्या-
हृतिहोमांते पूर्णाहुतिं हुत्वा देवतां संपूज्य कुंभस्थमूर्तौ
संयोज्य विधिवद्वह्निमुद्वास्यावशिष्टेन हविषा तत्तत्कल्पोक्त-
बलिदानं विधायोत्तरापोशनादिनीराजनांतं नित्यपूजोक्तवि-
धिना देवं संपूज्य विधिवत्ताम्बूलं निवेद्य प्राणायामत्रयर्ष्या-
दिकरषडंगन्यासपूर्वकं मूलमंत्रमष्टोत्तरसहस्रं वाष्टोत्तरशतं
संजप्य देवतायै निवेद्य स्तुत्वा प्रणमेत् । ततः पूर्वोक्तानां
त्रस्य द्रव्यसंस्कारान्कुर्यात् ॥

ततो गुरुः शिष्यमानीय वौषडिति मंत्रेण शिष्यनेत्रे वस्त्रेणाच्छाद्य शिष्यस्यांजलिं पुष्पैः पूरयित्वा गुरुः स्वयमेव मंत्रमुच्चरन्कलशे देवताप्रीत्यै क्षेपयेत् ॥ ततो नेत्रबंधनं दूरीकृत्वा दर्भास्तरे आसीनं शिष्यमात्मयागक्रमाद्भूतशुद्ध्यादिकं विधाय तत्तन्मंत्रोक्तन्यासाञ्छिष्यस्य देहे कुर्यात् ॥ ततः कुंभस्थां देवतां पुनः पंचोपचारैः पूजयित्वाऽलंकृतं शिष्यं प्राङ्मुखमन्यत्रोपवेशयेत् ॥ ततो गुरुर्मंगलाचारपूर्वकं तं कुंभं समुद्धृत्य तन्मुखस्थान्सुरद्रुमरूपान्पल्लवाञ्छिष्यस्य शिरसि निधाय मातृकां मूलमंत्रं च मनसा जपन्साधितैस्तोयैरुत्तराभिमुखस्तिष्ठन् गुरुस्तमभिषिंचेत् ॥ शिष्योऽवशिष्टेन जलेनाचम्य धौते वाससी परिधाय गुरोः सन्निधौ प्राङ्मुख उपविशेत् ॥ ततो गुरुरात्मनो देवतां शिष्यसंक्रांतां संभावयन् गंधादिभिः पूजयेत् ॥ ततः ॥ ॐ सहस्रारे हुंफडिति मंत्रेण शिष्यस्य शिखां बध्वा संरक्ष्य कलान्यासं कुर्यात् ॥ तद्यथा ॥ पादतलाज्जानुपर्यंतं ॐ निवृत्त्यै नमः ॥ जानुनोर्नाभिपर्यंतं ॐ प्रतिष्ठायै नमः ॥ नाभेराकंठपर्यंतं ॐ विद्यायै नमः ॥ कंठादाललाटांतं ॐ शांत्यै नमः ॥ ललाटाद्ब्रह्मरंध्रांतं ॐ शांत्यतीतायै नमः ॥ पुनर्ब्रह्मरंध्रादाललाटांतं ॐ शांत्यतीतायै नमः ॥ ललाटादाकंठांतं ॐ शांत्यै नमः ॥ कंठान्नाभिपर्यंतं ॐ विद्यायै नमः ॥ नाभेर्जानुपर्यंतं ॐ प्रतिष्ठायै नमः ॥ जानुनोः पादपर्यंतं ॐ निवृत्त्यै नमः ॥ ततः शिष्यस्य शिरसि हस्तं दत्वाऽष्टोत्तरशतं जप्त्वा ॥ ततो नूतनवस्त्रेण शिष्यमस्तक-

माच्छाद्य ॥ ॐ अद्येत्यादि० अमुकप्रवरान्विताऽमुकगो
त्रोत्पन्नोऽमुकशाखाध्यायी श्रीमानमुकदेवशर्माहममुकप्रव
रान्विताऽमुकगोत्रोत्पन्नायामुकवेदांतर्गतामुकशाखाध्यायि
नेऽमुकशर्मणे अमुकमंत्रं प्रददामीति शिष्यहस्ते जलं दद्या
त् ॥ ततो ददस्वेति शिष्यो ब्रूयात् ॥ तत ऋष्यादियुतं
मंत्रं गुरुर्दक्षिणकर्णे त्रिः श्रावयेत् ॥ अयं विधिर्ब्राह्मणानाम्
क्षत्रियवैश्ययोर्दक्षकर्णे त्रिः श्रावयेन्नतूदकदानम् ॥ स्त्रीशूद्र
योर्वामकर्णे त्रिः श्रावयेत् ॥ ततः शिष्यो लब्धमंत्रेण प्राण
यामत्रयं कृत्वा तस्य ऋष्यादिकरषडंगन्यासान्विधाय शि
सि गुरुं कंठे मंत्रं हृदि देवतां ध्यायन्मूलमंत्रमष्टोत्तरश
वारं संजप्य गुह्येति मंत्रेण देवतायै निवेद्य गुरुचरणयो
र्दंडवत्पतेत् ॥ ततो गुरुः—उत्तिष्ठ वत्स! मुक्तोऽसि सम्यग
चारवान्भव ॥ कीर्तिः श्रीः कांतिर्मेधायुर्बलारोग्यं सदास्
ते ॥ १ ॥ इत्युत्थापयेत् ॥ ततः शिष्यः कुशतिलजला
न्यादाय ॥ ॐ अद्येत्यादि० अमुकप्रवरान्वितामुकगोत्रो
त्पन्नोऽमुकशाखाध्यायी श्रीमानमुकदेवशर्माहमद्यकृतैतद्दी
कमंत्रग्रहणप्रतिष्ठार्थं दक्षिणार्थमिदं सुवर्णमग्निदैवतं अमु
कप्रवरान्वितामुकगोत्रोत्पन्नायामुकवेदांतर्गतामुकशाखाध्या
यिने श्रीमदमुकदेवशर्मणे श्रीगुरवे तुभ्यमहं संप्रददे ॥ तत
मिष्टान्नपानादिना ब्राह्मणान्परितोष्य स्वयं भुंजीत ॥ इति
प्रकारांतरेण कलावतीदीक्षाप्रकाशः ॥

अथ संक्षेपदीक्षा—

मुहूर्ते सर्वतोभद्रे नवकुंभं निधाय च ।
सोदकं गंधपुष्पाभ्यामर्चितं वस्त्रसंयुतम् ॥ १ ॥

सर्वौषधिनवरत्नपंचपल्लवसंयुतम् ।
ततो देवार्चनं कृत्वा हुनेदष्टोत्तरं शतम् ॥ २ ॥

तथाच निबंधे—

शिष्यं स्वलंकृतं वेद्यामुपास्यमुपसंविशेत् ।
मंत्रितैः प्रोक्षणीतोयैः शातकुंभजलैस्तथा ॥ ३ ॥
मूलमंत्रेणाष्टशतैर्मंत्रितैरभिषेचयेत् ।

अष्टशतैरष्टोत्तरशतैः ॥

अथ संपादयेन्मंत्रं हस्तं शिरसि धारयन् ।
समोऽस्त्वित्यक्षतान्दद्यात्ततः शिष्योऽर्चयेद्गुरुम् ॥ १ ॥

यद्वा दीक्षांतरम्—

शंखमभ्यर्च्यसाक्षतं तदंबुनाभिषिंच्याष्टवारं मूलेन शिरसि करं निधाय कर्णेऽष्टौ जपेत् ॥ तथाच ॥

तत्राप्यशक्तः कश्चिच्चेदब्जमभ्यर्च्य साक्षतम् ।
तदंबुनाभिषिच्याष्टवारं मूलेन के करम् ।
निधायाष्टौ जपेत्कर्णे उपदेशेऽप्ययं विधिः ॥

इति संक्षेपदीक्षा ।

अथोपदेशांतरमाह विश्वसारे—

चंद्रसूर्यग्रहे तीर्थे सिद्धक्षेत्रे शिवालये ।
मंत्रमात्रप्रकथनमुपदेशः स उच्यते ॥ १ ॥
महादीक्षा तथा दीक्षा उपदेशस्ततः परम् ।
युगेयुगे च कर्तव्या उपदेशः कलौ युगे ॥ २ ॥

इत्युपदेशांतरम् ।

अथ वीरदीक्षायां विशेषस्ताराभक्तिसुधार्णवे—

तत्र भूतशुद्धिं मातृकान्यासादिकं गुरुः स्वशरीरे शक्ति-

शरीरे च कृत्वा कलशस्थापनं श्रीपात्रादिस्थापनं च कृत्वा दूतीयागक्रमेण कुंडगोलोत्थद्रव्यमुत्पाद्य संस्कृत्य प्रथमादे रपि संस्कारं विधाय यथोक्तवीरपूजाक्रमेण देवतां संपूज्य शिष्याय मंत्रदानसमये। "शिष्यहस्ते महेशानि पात्रं दद्या त्कुलेश्वरीति" वीरचूडामण्युक्तं वीरपात्रम्।

इदं पात्रममृतं हि पीयतां भवभेषजम्।
पशुपाशसमुच्छेदकारणं भैरवोदितम्॥ १॥

इति कुलार्णवोक्तमंत्रेण शिष्यहस्ते दद्यात्॥ शिष्योऽ तेनैव मंत्रेण पीयतामित्यत्र पिबामीति पठित्वा यथोक्त र्माधर्महविर्दीप्त इत्यादिमंत्रेण पिबेत्। ततो गुरुर्मंत्रं दद्या त्। तत्र यामले—

ऋष्यादिसहितामेनां लिखित्वा भूमिमध्यगाम्।
पुष्पादिना समभ्यर्च्य शिष्यायाथ प्रदर्शयेत्॥ १॥
यदि शिष्ये महाप्रीतिस्तदा कर्णे वदेद्गुरुः॥
ततोऽप्यतितरां शिष्यो गुरुश्चेत्प्रीतिभाजनम्॥ २॥
तदा गंडूषपूर्वं हि दद्यादेनां गुरूत्तमः।
निर्विकल्पोऽपि शिष्यस्तं गृह्णीयाद्धृष्टमानसः॥ ३॥
तदभावे न सिद्धिः स्याद्देवताशापमाप्नुयात्।
एवं दीक्षां समाप्याथ तोषयेद्गुरुमात्मनः॥ ४॥
वस्त्रालंकरणैः कन्या युवतीरपि तोषयेत्।
समयाचारचतुरः पूजयेत्तोषयेद्धनैः॥ ५॥
कृतार्थोऽहं कृतार्थोऽहमात्मानमिति भावयेत्।

इति वीरदीक्षा।

अथ गुरोरभावे मंत्रग्रहणप्रकारः पद्मपुराणे—

गुरोरभावे विप्रेंद्र मंत्रग्रहणमुच्यते ॥
कृष्णपक्षे चतुर्दश्यां दक्षिणामूर्तिसंनिधौ ॥ १ ॥
तालपत्रे मनुं लिख्य स्थापयेच्च तदग्रतः ॥
संपूज्य दक्षिणामूर्तिमुपचारैः प्रयत्नतः ॥ २ ॥
पायसं विनिवेद्याथ प्रणमेद्दंडवत्ततः ।
तालपत्रं समालोक्य पठेदष्टोत्तरं शतम् ॥ ३ ॥
एवं गृहीतो मंत्रः स्याद् गुरोरपि विशिष्यते ।
गुरौ संभाविता दोषाः प्रायेण तु कलौ युगे ॥ ४ ॥
एवं गृहीतो मंत्रः स्यात्सर्वसिद्धिप्रदो नृणाम् ।

इति श्रीसत्यानंदनाथगुरुचरणप्रसादेन श्रीविष्णुभट्टविरचितायां दीक्षाप्रकाशिकायां प्रकारांतरे कलावतीदीक्षाकथनं नाम दशमः प्रकाशः ॥ १० ॥

---

## पूर्णाभिषेकप्रकाशः ॥ ११ ॥

अथ पूर्णाभिषेकविधिः—

अथैवं दीक्षितानां सद्भक्तियुक्तानां कृतपुरश्चरणक्रियाणां नित्यनैमित्तिकरतानां गुरुतः शास्त्रतश्च ज्ञापिताशेषरहस्यपरमार्थानां शिष्याणां गुरुः पूर्णाभिषेकाख्यं द्वितीयमभिषेकं कुर्यात् । तदुक्तं सारसंग्रहे—

पूर्णाभिषेकं वक्ष्यामि साधकानां सुखावहम् ।
विना येनाभिषेकेण साधकाः पूर्णबोधताम् ॥ १ ॥
आचार्यत्वं न चाप्नोति सद्भक्तिं च समाहिताम् ।

तस्माद्गुरुः प्रियं शिष्यं बोधयित्वाऽभिषेचयेत् ॥ २ ॥
विरच्य विपुलं चक्रं मंडपेऽतिमनोहरम् ।
खारितोयभृतं कुंभं स्थापयेच्चक्रमध्यतः ॥ ३ ॥
अन्येषु कलशान् रत्नवस्त्रहेमसमन्वितान् ।
दलेषु विधिवत्स्थाप्य तत्रावाह्येष्टदेवताम् ॥ ४ ॥
अभ्यर्च्य मध्ये चांगेषु सांगावरणदेवताः ।
शिष्यस्य जन्मनक्षत्रे प्राग्वत्तैरभिषेचयेत् ॥ ५ ॥
अयं पूर्णाभिषेकः स्यात्साधकाभीष्टसिद्धिदः ।

खारीलक्षणं तु भविष्यपुराणे—

पलद्वयं तु प्रसृतं द्विगुणं कुडवं मतम् ।
चतुर्भिः कुडवैः प्रस्थ आढकस्तैश्चतुर्गुणैः ॥ १ ॥
चतुर्गुणो भवेद्द्रोणः कुंभस्तद्द्वयतः स्मृतः ॥
कुंभैस्तैरष्टभिः खारी प्रोक्तामुनिभिरुत्तमा ॥ २ ॥

अथ प्रयोगः—

तत्र यथोक्ते मंडपे वेदिकारहिते विपुलं तत्तत्पूजाचक्रं नि र्माय प्राग्वत्पंचवर्णरजोभिः कर्णिकादलकेसरकोणादिकम पूर्य तत्र मध्ये खारितोयपूर्णं कुंभं प्रागुक्तविधिना संस्थाप्या न्येषु दलेषु कोणेषु चतुरस्रेषु सर्वावरणदेवतापूजास्थानेषु प्र स्थद्वयजलपूर्णान्कलशान्संस्थाप्य तत्र मध्यकुंभे देवतामावाह्य यथोक्तविधिना षोडशोपचारैः संपूज्यान्येषु कलशेषु तथैवां गावरणदेवताः संपूज्य दीक्षोक्तविधिना शिष्यजन्मनक्षत्रे प्राग्वत्पंचवाद्यघोषपुरःसरं श्रीसदाशिवभक्तैर्ब्राह्मणैः सहितः सम्यगभिषिंचेत् ॥ ततः शिष्योऽपि प्राग्वच्छ्रीगुरुं प्रणम्य

दक्षिणादिकं दत्वा ब्राह्मणान्भोजयित्वा भूरिदक्षिणादिभिस्तोषयेदिति सर्वसामान्यः पूर्णाभिषेकविधिः ॥

इति श्रीसत्यानंदनाथगुरुचरणप्रसादेन श्रीविष्णुभट्टविरचितायां दीक्षाप्रकाशिकायां सर्वसामान्यपूर्णाभिषेककथनं नामैकादशः प्रकाशः ॥

---

## गुरुभक्तिपादुकामाहात्म्यम् ॥ १२ ॥

अथैवं प्राप्तद्विविधाभिषेकानां साधकानां श्रीगुरुपादुकाभक्तिलक्षणं तत्पादुकामाहात्म्यं तद्भक्तजनेन प्राप्यं फलं तदभक्तानां प्रत्यवायं तद्भक्तैः कर्तव्याचारादिकं च लिख्यते ॥

तत्र श्रीकुलार्णवे श्रीदेव्युवाच—

कुलेश ! श्रोतुमिच्छामि पादुकाभक्तिलक्षणम् ।
आचारमपि देवेश ! वद मे करुणानिधे ! ॥ १ ॥

श्रीमहादेव उवाच—

शृणु देवि प्रवक्ष्यामि पादुकाभक्तिलक्षणम् ।
तस्य श्रवणमात्रेण भक्तिराशु प्रजायते ॥ २ ॥
वागुरामूलवलये सूत्राद्याः कवलीकृताः ।
एवं कुलार्णवज्ञानं पादुकायां प्रतिष्ठितम् ॥ ३ ॥
कोटिकोटिमहादानात्कोटिकोटिमहाव्रतात् ।
कोटिकोटिमहायज्ञात्परा श्रीपादुकास्मृतिः ॥ ४ ॥
कोटिमंत्रजपात्कोटिपुण्यतीर्थावगाहनात् ।
कोटिदेवार्चनाद्देवि ! परा श्रीपादुकास्मृतिः ॥ ५ ॥
महारोगे महोत्पाते महद्दुःखे महाभये ।
महापदि महापापे स्मृता रक्षति पादुका ॥ ६ ॥

तेनाधीतं श्रुतं ज्ञानं दत्तमिष्टं च पूजितम्।
जिह्वाग्रे वर्तते यस्य सदा श्रीपादुकाप्रिये ! ॥ ७ ॥
सकृच्छ्रीपादुकां देवि ! यो वा जपति भक्तितः।
स सर्वपापरहितः प्राप्नोति परमां गतिम् ॥ ८ ॥
शुचिर्वाप्यशुचिर्वा यो भक्त्या स्मरति पादुकाम्।
अनायासेन धर्मार्थकाममोक्षाँल्लभेत सः ॥ ९ ॥
श्रीनाथचरणांभोजं यस्यां दिशि विराजते।
तस्यै दिशे नमस्कुर्याद्भक्त्या प्रतिदिनं प्रिये ! ॥ १०॥
न पादुकापरो मंत्रो न देवः श्रीगुरोः परः ॥
नहि शाक्तात्परो मार्गो न पुण्यं कुलपूजनात् ॥ ११॥
ध्यानमूलं गुरोर्मूर्तिः पूजामूलं गुरोः पदम्।
मंत्रमूलं गुरोर्वाक्यं मोक्षमूलं गुरोः कृपा ॥ १२ ॥
गुरुमूलाः क्रियाः सर्वा लोकेऽस्मिन्कुलनायिके !।
तस्मात्सेव्यो गुरुर्नित्यं सिद्ध्यर्थं भक्तिसंयुतैः ॥ १३॥
तावदार्तिर्भयं दुःखं मोहशोकभ्रमादयः।
यावन्नायाति शरणं श्रीगुरुं भक्तिवत्सलम् ॥ १४ ॥
तावद्भ्रमति संसारे सर्वदुःखमलीमसे।
यावन्न भजते भक्त्या श्रीगुरुं शिवरूपिणम् ॥ १५॥
सर्वसिद्धिफलोपेतो मंत्रस्कंधोऽतिशोभनः।
गुरुप्रसादमूलोऽयं परतत्त्वमहाद्रुमः ॥ १६ ॥
यथा ददाति संतुष्टः प्रसन्नो वरदो मनुम्।
तथा भक्त्या धनैः प्राणैर्गुरुं यत्नेन तोषयेत् ॥ १७॥

गुर्वर्थं धारयेत्प्राणान्गुर्वर्थं चार्थमर्थयेत् ।
अपि प्राणान्परित्यज्य गुरुवाक्यं न लोपयेत् ॥ १८ ॥

यदा दद्याच्छिवाय स्वमात्मानं देशिकोत्तमः ।
तदा मुक्तो भवेच्छिष्यो न ततोऽस्ति पुनर्भवः ॥ १९ ॥

तावदाराधयेच्छिष्यः सुप्रसन्नो यथा भवेत् ।
गुरौ प्रसन्ने शिष्यस्य सद्यः पाशक्षयो भवेत् ॥ २० ॥

मनसापि न कांक्षेत भक्तो मानानुजीविकाम् ।
संपादयंति तत्सर्वं स्वामिनो भक्तवत्सलाः ॥ २१ ॥

ब्रह्मविष्णुमहेशाद्या देवतामुनियोगिनः ।
कुर्वंत्यनुग्रहं तुष्टा गुरौ तुष्टे न संशयः ॥ २२ ॥

भक्त्या संतुष्टगुरुणा ह्युपदिष्टः कृपालुना ।
कर्ममुक्तो भवेच्छिष्यो भुक्तिमुक्त्योः सभाजनम् ॥२३॥

शिष्येणापि तदा ग्राह्यं यदा संतोषितो गुरुः ।
तस्माद्गुरोः प्रियं कुर्यान्मनोवाक्कायकर्मभिः ॥ २४ ॥

यदि वा परितुष्टेन गुरुणा यत्र कुत्रचित् ।
मुक्तोऽसीति समादिष्टः सोऽपि मुक्तो भवेत्प्रिये !॥२५॥

अथवा निःप्रपंचेन धाम्ना केनचिदीश्वरि ! ।
करोमि गुरुरूपेण पशुपाशविमोचनम् ॥ २६ ॥

न मे प्रियश्चतुर्वेदी मद्भक्तः श्वपचः प्रियः ।
तस्मै देयं ततो ग्राह्यं स तु पूज्यो ह्यहं यथा ॥ २७ ॥

विप्रोऽपि गुणयुक्तो वाऽप्यभक्तो न प्रशस्यते ।
म्लेच्छोऽपि गुणहीनो वा भक्तिमान्स विशिष्यते ॥२८॥

गुरुभक्तिविहीनस्य तपो विद्या व्रतं कुलम्।
निष्फलं हि कुलेशानि! केवलं लोकरंजनम्॥ २९॥
गुरुभक्त्याख्यदहनदग्धं दुर्जातिकल्मषम्।
श्वपचोऽपि परैः पूज्यो न विद्वानपि नास्तिकः॥ ३०॥
धर्मार्थकामैः किं तस्य मोक्षस्तस्य करे स्थितः।
सर्वार्थैः श्रीगुरोर्देवि! यस्य भक्तिः स्थिरा सदा॥ ३१॥
स शिवो गुरुरूपेण भुक्तिमुक्तिप्रदो मम।
इति भक्त्या स्मरेद्यस्तु तस्य सिद्धिरदूरतः॥ ३२॥
यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ।
तस्यैते कथिता धर्माः प्रकाशन्ते कुलेश्वरि!॥ ३३॥
नारायणे महादेवे मातापित्रोश्च राजनि।
यथा भक्तिर्भवेद्देवि! तथा कार्या निजे गुरौ॥ ३४॥
लक्ष्मीनारायणौ वाणी धातारौ गिरिजाशिवौ।
श्रीगुरुं गुरुपत्नीं च पितराविति चिंतयेत्॥ ३५॥
गुरुभक्त्या यथा देवि! प्राप्यन्ते सर्वसिद्धयः।
यज्ञदानतपस्तीर्थव्रताद्यैर्न तथा प्रिये!॥ ३६॥
श्रीगुरौ निश्चला भक्तिर्वर्धते हि यथायथा।
तथातथास्य विज्ञानं वर्धते कुलनायिके!॥ ३७॥
किं तीर्थाद्यैर्महायासैः किं व्रतैः कायशोषणैः।
निर्व्याजसेवा देवेशि भक्तिर्येषां हि सद्गुरौ॥ ३८॥
कायक्लेशेन महता तपसा वापि यत्फलम्।
तत्फलं लभते देवि सुखेन गुरुसेवया॥ ३९॥

भोगमोक्षार्थिनां ब्रह्म विष्ण्वीशपदकांक्षिणाम्।
भक्तिरेव गुरौ देवि ! नान्यः पंथा इति श्रुतिः ॥ ४० ॥
अशुभानि च सर्वाणि महापातकजानि च।
भक्तिः क्षणेन दहति तूलराशिमिवानलः ॥ ४१ ॥
विश्वासाय नमस्तस्मै सर्वसिद्धिप्रदायिने।
येन मृद्दारुदृषदः फलंत्यविकलं फलम् ॥ ४२ ॥
न योगो न तपो नार्चा क्रमः कोऽपि निगद्यते।
अमाये कुलमार्गेऽस्मिन्भक्तिरेव विशिष्यते ॥ ४३ ॥
साक्षाद्गुरुमये देवि ! सर्वस्मिन्भुवनांतरे।
किं न भक्तिमतां क्षेत्रं मंत्रः केषां न सिध्यति ॥ ४४ ॥
गुरौ मनुष्यबुद्धिं च मंत्रे चाक्षरबुद्धिकाम्।
प्रतिमासु शिलाबुद्धिं कुर्वाणो नरकं व्रजेत् ॥ ४५ ॥
गुरुं न मर्त्यं बुध्येत यदि बुध्येत तस्य तु।
कदापि न भवेत्सिद्धिर्मंत्रैर्वा देवतार्चनैः ॥ ४६ ॥
श्रीगुरुं प्राकृतैः सार्धं ये स्मरंति वदंति वा।
तेषां हि सुकृतं सर्वं पातकं भवति प्रिये ! ॥ ४७ ॥
जन्महेतू हि पितरौ पूजनीयौ प्रयत्नतः।
गुरुर्विशेषतः पूज्यो धर्माधर्मप्रदर्शकः ॥ ४८ ॥
गुरुः पिता गुरुर्माता गुरुर्देवो गुरुर्गतिः।
शिवे रुष्टे गुरुस्त्राता गुरौ रुष्टे शिवो न हि ॥ ४९ ॥
गुरोर्हितं हि कर्त्तव्यं वाङ्मनःकायकर्मभिः।
अहिताचरणाद्देवि ! विष्ठायां जायते कृमिः ॥ ५० ॥

शरीरवित्तप्राणाँश्च श्रीगुरोर्वंचयंति ये ।
कृमिकीटपतंगत्वं प्राप्नुवंति नराधमाः ॥ ५१ ॥
गुरुत्यागाद्भवेन्मृत्युर्मंत्रत्यागाद्दरिद्रता ।
गुरुमंत्रपरित्यागाद्रौरवं नरकं व्रजेत् ॥ ५२ ॥
गुर्वर्थं धारयेद्देहं तदर्थं धनमर्जयेत् ।
निजप्राणान्परित्यज्य गुरुकार्यं समाचरेत् ॥ ५३ ॥
गुरूक्तं पौरुषं वाक्यमाशिषं चिंतयेत्प्रिये ! ।
तेन संताडिते वापि प्रसादमिति संस्मरेत् ॥ ५४ ॥
भोगयोग्यानि वस्तूनि गुरवे सर्वमर्पयेत् ।
तच्छेषमिति संचिंत्य चानुभूयात्कुलेश्वरि ! ॥ ५५ ॥
गुर्वग्रे न तपः कुर्यान्नोपवासव्रतादिकम् ।
तीर्थयात्रां च नो कुर्यान्न स्नायादात्मशुद्धये ॥ ५६ ॥
न नियोगं गुरोर्दद्याद्युष्माकमिति भाषयेत् ।
ऋणदानं तथादानं वस्तूनां क्रयविक्रयम् ॥ ५७ ॥
न कुर्याद्गुरुभिः सार्धं शिष्यो भूत्वा कदाचन ।
न कुर्यान्नास्तिकैर्वाक्यैः संभाषणमपीश्वरि ! ॥ ५८ ॥
विलोक्य दूरतो गच्छेन्नासीत सह तैः क्वचित् ।
गुरौ संनिहिते यस्तु पूजयेदन्यमंबिके ! ॥ ५९ ॥
स याति नरकं घोरं सा पूजा निष्फला भवेत् ।
शिरसा न वहेद्भारं गुरुपादाब्जधारिणम् ॥ ६० ॥
तदाज्ञया तत्कर्त्तव्यमाज्ञारूपो गुरुः स्मृतः ।
मंत्रागमादिकमन्यत्र श्रुतं तस्मै निवेदयेत् ॥ ६१ ॥

गुर्वाज्ञया तद्गृह्णीयात्तदनिष्टं विवर्जयेत्।
स्वशास्त्रोक्तं रहस्यार्थं न वदेद्यस्य कस्यचित् ॥ ६२ ॥
यदि ब्रूयात्स समयाच्च्युत एव न संशयः।
अद्वैतं भावयेन्नित्यं नाद्वैतं गुरुणा सह ॥ ६३ ॥
आत्मवत्सर्वभूतेषु हितं कुर्यात्कुलेश्वरि !।
आत्मस्थानांगसद्भावैः शुश्रूषा स्याच्चतुर्विधा ॥ ६४ ॥
शुश्रूषयानया देवि ! शिष्यः संतोषयेद्गुरुम्।
पदे पदेऽश्वमेधस्य फलं प्राप्नोत्यसंशयम् ॥ ६५ ॥
शुश्रूषणपरो यस्तु गुरुदेवमहात्मनाम्।
केवलं गुरुशुश्रूषा तत्कृपाकारिणी प्रिये ! ॥ ६६ ॥
सद्भक्तिसहिता सा चेत्सर्वकामफलप्रदा।
क्षीयंते सर्वपापानि वर्धंते पुण्यराशयः ॥ ६७ ॥
सिध्यंति सर्वकार्याणि गुरुशुश्रूषया प्रिये !।
यद्यदात्महितं वस्तु तत्तद्धितं न वंचयेत् ॥ ६८ ॥
गुरुदेवार्चको यस्तु तस्य पुण्यं न गण्यते।
भक्त्या वित्तानुसारेण गुरुमुद्दिश्य यत्कृतम् ॥ ६९ ॥
स्वल्पं वा बहु वा पुण्यं तुल्यमाढ्यदरिद्रयोः।
सर्वस्वमपि यो दद्याद्गुरवे भक्तिवर्जितः ॥ ७० ॥
शिष्यो न फलमाप्नोति भक्तिरेव हि कारणम्।
यस्मिन्द्रव्ये गुरोरस्ति स्पृहा नानुभवेच्च तत् ॥ ७१ ॥
अवश्यं यदि वांछा स्यादनुभूयात्तदाज्ञया।
यस्तिलार्धं तदर्धं वा गुरुस्वमुपजीवति ॥ ७२ ॥
लोभात्मोहात्स पच्येत नरके च त्रिसप्तके।

अल्पादल्पं गुरुद्रव्यमदत्तं स्वीकरोति यः ॥ ७३ ॥
तिरश्चां योनिमापन्नः क्रव्यादैर्भक्ष्यते प्रिये ! ॥
गुरुद्रव्याभिलाषी च गुरुस्त्रीगमनोत्सुकः ॥ ७४ ॥
पतितस्य क्षुल्लकस्य प्रायश्चित्तं न विद्यते ।
आज्ञाभंगोऽर्थग्रहणं गुरोरप्रियवर्तनम् ॥ ७५ ॥
गुरुद्रोहमिदं प्राहुर्यः करोति स पातकी ।
स्वद्रव्यविनियोगं च नानिवेद्य गुरोश्चरेत् ॥ ७६ ॥
अनिवेद्य तु यः कुर्यात्स भवेद्ब्रह्मघातकः ।
गुरुस्थानं संप्रदायं तद्धर्मं यो विनाशयेत् ॥ ७७ ॥
गुरुभिः स वहिः कार्यो दंड्यो वध्यश्च पातकी ।
गुरुकोपान्न नाशोऽन्यो गुरुद्रोहान्न पातकम् ॥ ७८ ॥
न मृतिर्गुरुनिंदाया गुर्वनिष्टान्न चापदः ।
जीवेदग्निप्रविष्टो वा नरः पीतविषोऽपि वा ॥ ७९ ॥
मृत्युहस्तगतो वापि नापराधकरो गुरोः ।
यत्र श्रीगुरुनिंदा स्यात्पिधाय श्रवणौ स्वकौ ॥ ८० ॥
सद्यस्तस्मादपक्रामेद्दूरं न शृणुयाद्यथा ।
गुरोर्नाम जपेत्पश्चाच्छ्रवणे सा प्रतिक्रिया ॥ ८१ ॥
गुरुमित्रसुहृद्दासीदासाद्यान्नापमानयेत् ।
न निंदेदन्यसमयान्वेदशास्त्रागमादिकान् ॥ ८२ ॥
श्रीगुरोः पादुका भूषा गुरुनामस्मृतिर्जपः ।
गुर्वाज्ञाकरणं कृत्यं शुश्रूषा भजनं गुरोः ॥ ८३ ॥
विविक्षुर्देशिकावासं शांतचित्तोऽतिभक्तिमान् ।
व्यजनं पादुकां छत्रं चामरं वाहनादिकम् ॥ ८४ ॥

तांबूलमुल्बणं वेषमुत्सृज्य प्रविशेच्छनैः ।
वाहनं पादुकां छत्रमासनं वसनादिकम् ॥ ८५ ॥
दृष्ट्वा गुरोर्नमस्कुर्यान्नात्मभोगाय कारयेत् ।
पादप्रक्षालनं स्नानमभ्यंगं दंतधावनम् ॥ ८६ ॥
मूत्रं निष्ठीवनं क्षौरं शयनं स्त्रीनिषेवणम् ।
वीरासनं च दुर्वाक्यमालस्यं हास्यरोदनम् ॥ ८७ ॥
केशमोचनमुष्णीषं कंचुकं नग्नतां तथा ।
पादप्रसारणं वादं कलहं दूषणं प्रिये ! ॥ ८८ ॥
अंगभंगांगवाद्यादिकरास्फालनधूननम् ।
द्यूतकुक्कुटमल्लादियुद्धमित्यादि चांबिके ! ॥ ८९ ॥
गुरुयोगिमहासिद्धपीठक्षेत्राश्रमेषु च ।
नाचरेदाचरेन्मोहाद्देवताशापमाप्नुयात् ॥ ९० ॥
उपचारं विना तिष्ठेद्गुर्वग्रे नेच्छया विशेत् ।
कृतांजलिपुटो भूत्वा शनैर्गुर्वाज्ञया विशेत् ॥ ९१ ॥
मुखावलोकी सेवेत तदुक्तं च समाचरेत् ।
गुरूक्तानुक्तकार्येषु नोपेक्षां कारयेत्प्रिये ! ॥ ९२ ॥
सदसद्यद्गुरुर्ब्रूयात्तत्कार्यमविशंकया ।
निग्रहानुग्रहे वापि गुरुः सर्वस्य कारणम् ॥ ९३ ॥
निर्गतं यद्गुरोर्वक्त्रात्सर्वं शास्त्रं तदुच्यते ।
गुरुकार्ये स्वयं शक्तो नापरं प्रेषयेत्प्रिये ! ॥ ९४ ॥
बहुत्वे तत्परैर्भृत्यैः सहितोऽप्यतिभक्तिमान् ।
गच्छंस्तिष्ठन्स्वपन् जाग्रञ्जपन् जुह्वन्प्रपूजयन् ॥ ९५ ॥

गुर्वाज्ञामेव कुर्वीत तद्गतेनांतरात्मना ।
अभिमानो न कर्तव्यो जातिविद्याधनादिभिः ॥ ९६॥
यदाऽर्चा निवसेन्नित्यं शिष्यः श्रीगुरुसंनिधौ ।
कायाभूतो परित्यागी विनीतस्त्वतिभक्तिमान् ॥ ९७॥
देवि! गुर्वग्रतस्तिष्ठेद्गुरुकार्यसमुत्सुकः ।
स्वकार्यमन्यकार्यं वा शिष्यः श्रीगुरुचित्तवित् ॥ ९८॥
गुरुपार्श्वगतो नम्रः पृच्छन्स्वमिव संवदेत् ।
सामान्यतो निषेवेच्चेत्सद्गुरोर्यदि संनिधौ ॥ ९९ ॥
आचरेद्यदि मूढात्मा दोषः कोटिगुणो भवेत् ।
अनाहत्य गुरोर्वाक्यं शृणुयाद्यः पराङ्मुखः ॥ १००॥
अहितं वाऽहितं वापि रौरवं नरकं व्रजेत् ।
गोब्राह्मणवधं कृत्वा यत्पापं समवाप्नुयात् ॥ १०१ ॥
तत्पापं समवाप्नोति गुर्वग्रेऽनृतभाषणात् ।
स्थानांतराकृते चार्थव्यसने विषमे स्थितम् ॥ १०२॥
श्रीगुरुं न त्यजेत्क्वापि तदादिष्टो व्रजेत्प्रिये !
अधःस्थिते गुरावूर्ध्वं न तिष्ठेत कदाचन ॥ १०३ ॥
न गच्छेदग्रतस्तस्य न विशेदुत्थिते गुरौ ।
शक्तिच्छायां गुरुच्छायां देवच्छायां न लंघयेत् ॥१०४॥
स्वच्छायां तेषु नो कुर्यान्नस्वपेद्गुरुसंनिधौ ।
भाषणं पठनं गानं भोजनं शयनादिकम् ॥ १०५ ॥
अनादिष्टो न कुर्वीत नत्वा वंदनपूर्वकम् ।
ब्रह्महत्याशतं कुर्याद्गुर्वाज्ञां प्रतिपालयेत् ॥ १०६ ॥

विना गुर्वाज्ञया शिष्यो निःश्वसेन्नातिशासनात् ।
सर्वं गुर्वाज्ञया कुर्यान्नालिंगेत्तत्स्त्रियं प्रिये ! ॥ १०७ ॥
भक्त्या प्रणम्य चोत्तिष्ठेत्कृतांजलिपुटः प्रिये ! ।
पश्चात्पादेन निर्गच्छेन्नमस्कृत्य गुरोर्गृहात् ॥ १०८ ॥
एकासने नोपविशेद्गुरुणा तत्समैः सह ।
न विशेदासने देवि ! देवतागुरुसन्निधौ ॥ १०९ ॥
गुरोः सिंहासनं देयं ज्येष्ठानामुत्तमासनम् ॥
देश्यासनं कनिष्ठानामितरेषां समासनम् ॥ ११० ॥
जातिविद्याधनाढ्यो वा दूरे दृष्ट्वा गुरुं सदा ।
दंडप्रणामं कृत्वैकस्त्रिःप्रदक्षिणमाचरेत् ॥ १११ ॥
ततस्त्रिषट् द्वादश वा ज्येष्ठादिष्वेकमेव च ।
गुरुतद्गुरुयोगे तु वंदेत परमं गुरुम् ॥ ११२ ॥
ततो नमेद्गुरुं सोऽपि गुर्वग्रे तं निवारयेत् ।
प्रगुरोः सन्निधौ शिष्यः स्वगुरुं मनसा नमेत् ॥ ११३ ॥
गुरुबुद्ध्या नमेत्सर्वं दैवतं तृणमेव वा ।
भावयेद्देवबुद्ध्या तु प्रतिमां लोहमृण्मयीम् ॥ ११४ ॥
गुरोः प्रणामत्रितयं ज्येष्ठानामेकमेव च ।
पूज्यानामंजलिस्तद्वदन्येषां वाक्यवंदनम् ॥ ११५ ॥
देवान्गुरून्कुलाचार्यान् ज्ञानवृद्धाँस्तपोधनान् ।
विद्याधिकान्स्वकर्मस्थान्प्रणमेत्कुलनायिके ! ॥ ११६ ॥
स्त्रीद्विष्टं गुरुभिः शप्तं पाषंडं पतितं शठम् ।
विकर्मिणं कृतघ्नं वा नाश्रमिस्थं च नो नमेत् ॥ ११७ ॥

अनिवेद्य गुरौ भुक्ते यस्त्वेकग्रामसंस्थितः ।
अमेध्यं तेन भुक्तं स्याच्छूकरो जायते मृतः ॥ ११८॥
एकग्रामस्थितः शिष्यस्त्रिसंध्यं प्रणमेद्गुरुम् ।
क्रोशमात्रस्थितो भक्त्या गुरुं प्रतिदिनं नमेत् ॥ ११९॥
अर्धयोजनगः शिष्यः प्रणमेत्पंचपर्वसु ।
एकयोजनमारभ्य योजनद्वादशावधि ॥ १२० ॥
दूरदेशस्थितः शिष्यो भक्त्या तत्सन्निधिं गतः ।
तत्तद्योजनसंख्याते[1] विशेषं प्रणमेद्गुरुम् ॥ १२१ ॥
अतिदूरस्थितः शिष्यो यदेच्छा स्यात्तदा व्रजेत् ।
रिक्तहस्तस्तु नोपेयाद्राजानं दैवतं गुरुम् ॥ १२२ ॥
फलपुष्पांबरादीनि यथाशक्त्या समर्पयेत् ।
एवं यो नाचरेद्देवि ! ब्रह्मराक्षसतां व्रजेत् ॥ १२३ ॥
गुरुशक्तिश्च तत्पुत्रो ज्येष्ठभ्राता गुरोः समः ।
आत्मवच्च कनीयांसः पुत्रवत्कुलपालकाः ॥ १२४ ॥
लोकाचार्यस्य देवेशि ! गुरुज्येष्ठकनिष्ठयोः ।
गुरुकल्पस्य कुर्वीत प्रणामं स्वगुरोर्यथा ॥ १२५ ॥
स्वज्येष्ठश्च क्रमे ज्येष्ठः कुलज्येष्ठस्तृतीयकः ।
गुरोर्ज्येष्ठस्तु देवेशि ! इति ज्येष्ठचतुष्टयम् ॥ १२६ ॥
यावज्ज्येष्ठाभिवादे तु क्रमाज्ज्येष्ठांगयोगतः ।
गुरोश्च कुलवृद्धस्य वंदनादिविधानतः ॥ १२७ ॥
पितृमात्रादिसर्वेषु पूज्यकोटिषु बंधुषु ।
अभ्युत्थानप्रणामाद्यैरव्यक्तो दोषलाघवः ॥ १२८ ॥

---

१ "तत्तद्योजनसंख्यातमासैर्गत्वा नमेद्गुरुम्" इति पाठः ।

यदा त्वाचार्यरूपेण स्वात्मानं संप्रकाशयेत् ।
अभ्युत्थानप्रणामाद्यैरव्यक्तो दोषलाघवः ॥ १२९ ॥
यदा त्वाचार्यरूपेण स्वात्मानं संप्रकाशयेत् ।
अभ्युत्थानप्रणामाद्यैर्दोषदः स्यात्तदा प्रिये ! ॥ १३० ॥
पतिर्भूत्वा पशुभ्यस्तु प्रणामं यः करिष्यति ।
स महापशुरित्युक्तो देवताशापमाप्नुयात् ॥ १३१ ॥
यो गुरुस्थानकं प्राप्तः पादुकापरिसंख्यया ।
गुरुवत्स तु मंतव्यो ज्येष्ठैर्वंद्यो न च प्रिये ! ॥ १३२ ॥
इति ते कथितं किंचित्पादुकाचारलक्षणम् ।
समासेन कुलेशानि ! किं भूयः श्रोतुमिच्छसि ॥ १३३ ॥

इति पादुकाचारविधिः

---

## अथ समयाचारविधिः ।

कुलार्णवे—

श्रीदेव्युवाच ।
कुलेश ! श्रोतुमिच्छामि सर्वलोकैकपूजित ! ।
कुलाचारक्रमं देव ! वद मे करुणानिधे ! ॥ १ ॥
श्रीमहादेव उवाच ॥
शृणु देवि ! प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ।
तस्य श्रवणमात्रेण पशुपाशैर्विमुच्यते ॥ २ ॥
यदि चेद्दीक्षितो ज्येष्ठः कुलपूजाविवर्जितः ।
तत्त्वनिष्ठः क्रमज्ञश्चेत्कुलपूजां समाचरेत् ॥ ३ ॥
तत्समीपे ततो गत्वा नमस्कृत्य गुरोर्यथा ।

तस्मै निवेद्य तत्सर्वं शेषं भुंजीत पार्वति ! ॥ ४ ॥
पूजामध्ये गुरौ ज्येष्ठे पूज्ये वापि समागते ।
नत्वा ब्रूयात्स्थितं शेषमाचरेत्तदनुज्ञया ॥ ५ ॥
ज्येष्ठस्यापि कनिष्ठस्य शिष्यावेकत्र संस्थितौ ।
तत्र पूर्ववदाचारः कथितः कुलनायिके ! ॥ ६ ॥
अज्ञातकाले प्राप्ते चेत्पौर्वापर्यं न चिंतयेत् ।
नत्वा स्वस्वगुरुं देवि ! स्वस्वमार्गेण तर्पयेत् ॥ ७ ॥
नित्यार्चनं दिवा कुर्याद्रात्रौ नैमित्तिकार्चनम् ।
उभयोः काम्यकर्माणि इति शास्त्रस्य निश्चयः ॥ ८ ॥
अस्नात्वा नासनस्थो वा भुक्त्वा वा प्रलपन्नपि ।
गंधपुष्पाक्षताकल्पवस्त्राद्यैरनलंकृतः ॥ ९ ॥
अविन्यस्तशरीरो वा कुलपूजां न कारयेत् ।
विना मंत्रेण या पूजा विना मांसेन तर्पणम् ॥ १० ॥
विना शक्त्या तु यत्पानं निष्फलं कथितं प्रिये ! ।
श्रीचक्रमेको नो कुर्यादेकपात्रे तु नार्चयेत् ॥ ११ ॥
नार्चयेदेकहस्तेन न पिबेदेकपाणिना ।
मद्यमांसासवैर्देवि ! नार्चयेत्पशुसन्निधौ ॥ १२ ॥
प्रणम्य प्रविशेच्चक्रे विनिर्गच्छेत्प्रणम्य च ।
श्रीचक्रे नासने तिष्ठेन्न च वीरासने प्रिये ! ॥ १३ ॥
श्रीचक्रदर्शनं देवि ! नेत्रयोः पापनाशनम् ।
तन्नास्ति चरणद्वंद्वं कौलिकस्याक्षिगोचरम् ॥ १४ ॥
अनाचारान्सदाचारान् चक्रस्थान् शक्तिकौलिकान् ।
शिवगौरीधिया देवि ! भावयेन्नावमानयेत् ॥ १५ ॥

कुलाचार्यगृहं गत्वा भक्त्या पापविशुद्धये।
याचयेदमृतं पानं तदभावे जलं पिबेत् ॥ १६ ॥
कुलाचार्येण तच्छक्त्या दत्तं पात्रं तु भक्तितः।
नमस्कृत्य च गृह्णीयादन्यथा नरकं व्रजेत् ॥ १७ ॥
अस्नात्वा वापि भुक्त्वा वाप्यभक्त्या वा कुलेश्वरि !।
यः सेवेत कुलद्रव्यं स दारिद्र्यमवाप्नुयात् ॥ १८ ॥
उष्णीषी कंचुको नग्नो मुक्तकेशो गलावृतः।
व्यग्रो रुषा विवादी च न सेवेत कुलामृतम् ॥ १९ ॥
योगामृतस्य निष्ठावान्मद्यभांडोपरि भ्रमात्।
ऊर्ध्वनालेन पानाच्च देवताशापमाप्नुयात् ॥ २० ॥
एकासने निविष्टा ये भुंजानाश्चैकभाजने।
एकपात्रे पिबंतो ये ते यांति नरकं प्रिये ! ॥ २१ ॥
यः सेवेत कुलद्रव्यमेकग्रामे स्थिते गुरौ।
तत्कुलकेऽपि तत्पुत्रे स्वज्येष्ठे कुलदेशिके !।
विनानुज्ञां कुलेशानि ! सोऽक्षयं नरकं व्रजेत् ॥ २२ ॥
उच्छिष्टो न स्पृशेच्चक्रे कुलद्रव्याणि पार्वति !।
बहिः प्रक्षाल्य च करौ कुलद्रव्याणि दापयेत् ॥ २३ ॥
मद्यभांडं समुद्धृत्य न पात्रं पूरयेत्प्रिये !।
भोगपात्रं सुराकुंभे निक्षिपेन्न कदाचन ॥ २४ ॥
चक्रमध्ये शुद्धधिया करास्यक्षालनादिकम्।
यः करोति हि मूढात्मा स भवेदापदां पदम् ॥ २५ ॥
निष्ठीवनं मलं मूत्रमधोवायुविसर्जनम्।

श्रीचक्रमध्ये यः कुर्यात्स भवेद्योगिनीपशुः ॥ २६ ॥
चक्रमध्ये घटे भिन्ने पात्रे च स्खलिते तथा ।
दीपनाशे च तच्छांत्यै श्रीचक्रं कारयेत्प्रिये ! ॥ २७ ॥
आत्मा (?) जपंति ध्यायंति स्तुवंति प्रणमंति च ।
बोधयंति च पृच्छंति नंदंति ज्ञानिनः प्रिये ! ॥ २८ ॥
आत्मा (?) भ्रमंति गर्जंति हसंति च वदंति च ।
रुदंति स्त्रियमिच्छंति निंदंत्यज्ञानिनः प्रिये ! ॥ २९ ॥
परिहासं प्रलापं च वितंडं बहुभाषणम् ।
उदासी न्यस्तसंक्रोधं चक्रमध्ये विवर्जयेत् ॥ ३० ॥
पात्रहस्तो महादेवि ! न भ्रमेच्चक्रमध्यगः ।
पूर्णपात्रं करे धृत्वा न तिष्ठेत चिरं प्रिये ! ॥ ३१ ॥
नालपेत्पात्रहस्तः सन् न भिंद्यात्पात्रमंबिके ! ।
पादाभ्यां न स्पृशेत्पात्रं न बिंदुं पातयेदधः ॥ ३२ ॥
नैकहस्तेन दातव्यं न मुद्रावर्जितं पिबेत् ।
पात्रं च चालयेत्स्थानान्न कुर्यात्पात्रसंकरम् ॥ ३३ ॥
सशब्दं न पिबेद् द्रव्यं तथैव च न पूरयेत् ।
नान्योन्यं ताडयेत्पात्रं न पात्रं पातयेदधः ॥ ३४ ॥
साधारं नोद्धरेत्पात्रमनाधारे न निक्षिपेत् ।
रिक्तपात्रं न कुर्वीत न पात्रं भ्रामयेत्प्रिये ! ॥ ३५ ॥
न पात्रं लंघयेद्धीमान्पात्रं नोत्पाटयेत्प्रिये ! ।
प्रकल्प्य गोपयेत्पात्रमित्याज्ञा परमेश्वरि ॥ ३६ ॥
यदा संदीपनोल्लासः कौलिकः पशुमीक्षते ।
पठेद्वा पशुशास्त्राणि स गच्छेद्वा पशुप्रियम् ॥ ३७ ॥

कुर्यात्पशुप्रसंगं वा पशुकार्याणि वाचरेत् ।
धर्मार्थायुर्यशःपुण्यं ज्ञानसौख्यादि नश्यति ॥ ३८ ॥
श्रीचक्रस्थं कुलद्रव्यं यः पशुभ्यः प्रयच्छति ।
स्नेहाल्लोभाद्भयाद्वापि स भवेद्योगिनीपशुः ॥ ३९ ॥
वैरिणापि न कर्तव्यो वाग्वादश्चक्रमध्यतः ।
पितृमातृसमं पश्येत्तेनोक्तं परुषं सहेत् ॥ ४० ॥
हृष्टचेताः प्रहृष्येत स्वजनं मित्रसुप्रियम् ।
तथा च कौलिकं दृष्ट्वा स भवेद्योगिनीप्रियः ॥ ४१ ॥
ब्रह्मादिस्तंबपर्यंतं यस्य मे गुरुसंततिः ।
तस्य मे सर्वशिष्यस्य को न पूज्यो महीतले ॥ ४२ ॥
इति निश्चलबुद्धिर्यः स भवेदावयोः प्रियः ।
अहंगुरुरहं ज्येष्ठस्त्वहं वेद्मीति गर्वितः ॥ ४३ ॥
अहं येषां मानमेव कौलिका न भवंति ते ।
श्रीगुरुं कुलशास्त्राणि पूज्यस्थानानि यानि च ॥ ४४ ॥
भक्त्या श्रीपूर्वकं देवि! प्रणम्य परिकीर्तयेत् ।
गुरुनाम्ना न भाषेत जपकालादृते प्रिये! ॥ ४५ ॥
श्रीनाथदेव! स्वामीति विवादे साधने वदेत् ।
श्रीगुरोः पादुकां मुद्रां मूलमंत्रं स्वपादुकाम् ॥ ४६ ॥
शिष्यादन्यत्र देवेशि! न वदेद्यस्य कस्यचित् ।
पारंपर्यं समास्थाय मंत्राचारादिकं प्रिये! ॥ ४७ ॥
सर्वं गुरुमुखाल्लब्धं सफलं स्यान्न चान्यथा ।
श्रीशास्त्राश्रयभूतं च पुस्तकं परमेश्वरि! ॥ ४८ ॥
नित्यं समर्चयेद्भक्त्या पशुहस्ते न निक्षिपेत् ।

स्वदारवन्निषेवेत कुलशास्त्राणि पार्वति ! ॥ ४९ ॥
पशुशास्त्राणि सर्वाणि वर्जयेत्परदारवत् ।
श्वचर्मस्थं यथा क्षीरमपेयं स्याद्द्विजोत्तमैः ॥ ५० ॥
तथा पशुमुखाद्धर्मो न श्रोतव्यश्च कौलिकैः ।
यः शृणोति कुलाचारं यथाशास्त्रं च यो वदेत् ॥ ५१॥
तावुभौ गच्छतः साक्षाद्योगिनीवीरमेलनम् ।
अश्रद्दधाना ये चात्र कुलधर्मे कुलेश्वरि ! ॥ ५२ ॥
नरकान्न निवर्तंते यावदाभूतसंप्लवम् ।
ऊढा धृता च प्रीता च मूल्येन च समाहृता ॥ ५३ ॥
सकृत्कामगता वापि पंचधा गुरुयोषितः ।
अलंघ्याः पूजनीयाः स्युर्गुरुवद्गुरुयोषितः ॥ ५४ ॥
गुरुशक्तिं वीरभार्यां कुमारीं व्रतधारिणीम् ।
व्यंगागीं विकृतांगीं च कुब्जामपि न कामयेत् ॥ ५५॥
सुतां च भगिनीं पौत्रीं स्नुषां वापि प्रियामपि ।
न कामयेद्गुरोरग्रे कुर्यान्नान्योपगूहनम् ॥ ५६ ॥
कृष्णांशुकां कृष्णवर्णां कुमारीं च कृशोदरीम् ।
मनोहरां यौवनस्थामर्चयेद्देवताधिया ॥ ५७ ॥
एकदापि न सेवेत बलेन कुलयोगिनीम् ।
चक्रमध्ये क्षयं क्षुब्धं कामयेन्न कुलेश्वरि ! ॥ ५८ ॥
आममांसं सुराकुंभं मत्तेभं सिद्धदर्शनम् ।
सहकारमशोकं च क्रीडालोलां कुमारिकाम् ॥ ५९ ॥
एकवृक्षं श्मशानं च समूहं योषितामपि ।
नारीं च रक्तवसनां दृष्ट्वा वंदेत भक्तितः ॥ ६० ॥

गुरुशक्तिसुतज्येष्ठकनिष्ठकुलदेशिकान् ।
कुलदर्शनशास्त्राणि कुलद्रव्याणि कौलिकान् ॥ ६१ ॥
प्रेरकान्सूचकाँश्चापि वाचकान्दर्शकाँस्तथा ।
शिक्षिकान्बोधकान्योगियोगिनीसिद्धपौरुषान् ॥ ६२ ॥
कन्याः कुमारिका नग्नानुन्मत्तानतियोगिनः ।
न निंदेन्न जुगुप्सेत न हसेन्नावमानयेत् ॥ ६३ ॥
नाप्रियं नानृतं ब्रूयात्कस्यापि कुलयोगिनः ।
कुरूपेत्यतिकृष्णेति न वदेत्कुलयोषिताम् ॥ ६४ ॥
परीक्षयेन्न भक्तानां वीराणां च कृताकृतैः ।
न पश्येद्वनितां नग्नामुन्मत्तां प्रकटस्तनीम् ॥ ६५ ॥
न दिवा सेवयेन्नारीं तद्योनिं न निरीक्षयेत् ।
या काचिदंगना लोके सा मातृकुलसंभवा ॥ ६६ ॥
कुप्यन्ति कुलयोगिन्यो वनितानां व्यतिक्रमात् ।
शतापराधैर्वनितां पुष्पेणापि न ताडयेत् ॥ ६७ ॥
दोषान्न गणयेत्स्त्रीणां गुणानेव प्रकाशयेत् ।
तिष्ठंति कुलयोगिन्यः कुलवृक्षेषु सर्वदा ॥ ६८ ॥
तत्पत्रेषु न भोक्तव्यमर्कपत्रे विशेषतः ।
न स्वपेत्कुलवृक्षाधो न चोपद्रवमाचरेत् ॥ ६९ ॥
दृष्ट्वा भक्त्या नमस्कुर्याच्छेदयेन्न कदाचन ।
श्लेष्मांतककरंजाक्षनिंबाश्वत्थकदंबकाः ॥ ७० ॥
बिल्वोवटोदुंबरौ च चिंचेति नवमः स्मृतः ।
प्रायश्चित्तं भृगोः पातं संन्यासं व्रतधारणम् ॥ ७१ ॥
तीर्थयात्राभिगमनं कौली पंच विवर्जयेत् ।

वीरहत्या वृथा पानं वीरद्रव्यापहारता ॥ ७२ ॥
वीरस्त्रीगमनं चापि तत्संयोगं च पंचमम् ।
महापातकमित्युक्तं कौलिकानां कुलान्वये ॥ ७३ ॥
शैवे तत्त्वपरिज्ञानं गारुडे विषभक्षणम् ।
निग्रहानुग्रहौ कौले ज्योतिषे ग्रहणं तथा ॥ ७४ ॥
देवतागुरुशास्त्राणि सिद्धाचारविडंबकाः ।
विद्याचौरो गुरुद्रोही ब्रह्मराक्षसतां व्रजेत् ॥ ७५ ॥
गुरुं हुंकृत्य तुंकृत्य विप्रं निर्जित्य वादतः ।
विकल्पः कुलशास्त्रेषु भवंति ब्रह्मराक्षसाः ॥ ७६ ॥
एकाक्षरप्रदातारं यो गुरुं नैव मन्यते ।
शुनो योनिशतं गत्वा चांडालत्वमवाप्नुयात् ॥ ७७ ॥
मातरं पितरं भार्यां भ्रातरं बान्धवं सुतम् ।
कुलनिंदाकरं देवि ! हन्यात्तमविचारतः ॥ ७८ ॥
गुर्वर्थं देवतार्थं वा कौलिकार्थं कुलेश्वरि ! ।
कुलागमार्थमथवा कुलधर्मार्थमेव च ॥ ७९ ॥
देवि ! निंदाकरं हत्वा बाधितः स्वयमेव च ।
यस्त्यजेद्दुस्त्यजान्प्राणान्स परे लीयते शिवे ! ॥ ८० ॥
एकस्मिन्निधने यत्र प्राप्यते दुष्टचारिणि ।
बहूनां भविता क्षेमः पुण्यं तस्य वधो भवेत् ॥ ८१ ॥
श्रीचक्रकृतवृत्तांतं शुभं वा यदि वाऽशुभम् ।
कदाचिन्नैव वक्तव्यमित्याज्ञा पारमेश्वरी ॥ ८२ ॥
कुलधर्मप्रसंगं च पशूनां पुरतः प्रिये ! ।
कदाचिन्नैव कुर्वीत शूद्रे वेदाक्षरं यथा ॥ ८३ ॥

पीठक्षेत्रागमाम्नायसद्विद्याचारकौलिकान् ।
कुलद्रव्यादिकं देवि ! न वदेत्पशुसन्निधौ ॥ ८४ ॥
यथा रक्षंति चौरेभ्यो धनधान्यांबरादिकम् ।
कुलधर्मं तथा देवि ! पशुभ्यः परिपालयेत् ॥ ८५ ॥
अंतः कौलं बहिः शैवं जनमध्ये तु वैष्णवम् ।
कौलं सुगोपयेद्देवि ! नालिकेरफलांबुवत् ॥ ८६ ॥
कुलधर्ममिमं देवि ! सर्वावस्थासु सर्वदा ।
गोपयेच्च प्रयत्नेन जननीजारगर्भवत् ॥ ८७ ॥
वेदशास्त्रपुराणानि सामान्यगणिका इव ।
इयं तु शांभवी विद्या गोप्या कुलवधूरिव ॥ ८८ ॥
सुगुप्तकौलिकाचारमनुगृह्णंति देवताः ।
वांछासिद्धिं प्रयच्छंति नाशयंति प्रतारकान् ॥ ८९ ॥
कुलेशि ! कुलशास्त्रज्ञाः कुलपूजापरायणाः ।
ये त्वां रहसि सेवंते तिष्ठंति तव सन्निधौ ॥ ९० ॥
गुरुं प्रकाशयेद्धीमान् मंत्रं यत्नेन गोपयेत् ।
अप्रकाशप्रकाशाभ्यां क्षीयंते संपदायुषी ॥ ९१ ॥
सर्वाचारपरिभ्रष्टः कुलाचारं समाश्रयेत् ।
कुलाचारपरिभ्रष्टो रौरवं नरकं व्रजेत् ॥ ९२ ॥
शास्त्रेषु निष्कृतिर्दृष्टा महापातकिनां प्रिये ! ।
कुलभ्रष्टस्य देवेशि ! न दृष्टा निष्कृतिः क्वचित् ॥ ९३ ॥
कुलधर्मं समाश्रित्य ह्याचारं यो न पालयेत् ।
यथेष्टाचारिणस्तस्य महापातकिनः प्रिये ! ॥ ९४ ॥

आपदो दुरितं रोगा दारिद्र्यं कलहं भयम्।
योगिनीनां प्रकोपश्च स्खलितानि पदे पदे ॥ ९५ ॥
ध्वस्तमानः प्रणष्टश्च तेजोहीनोऽतिदुःखितः।
निंदितः सर्वविद्विष्टो विह्वलः संगवर्जितः ॥ ९६ ॥
देशदेशांतरं याति कार्यहानिश्च सर्वदा।
तत्रापि कुलमार्गस्थाः शाकिन्यः कुलपालकाः ॥ ९७ ॥
भक्षयंति पुरा तासां वरो दत्तो मयैव तु।
तस्मादाचारवान्देवि! योगिनीनां प्रियो भवेत् ॥ ९८ ॥
नाशमेति चतुर्वेदी ह्यनाचारी कुलेश्वरि!।
पादुकामात्रसारज्ञः सदाचारी सुयंत्रितः ॥ ९९ ॥
सदाचारेण देवत्वं योगिनीवीरमेलनम्।
संप्राप्नुवंति तिर्यक्त्वं कौलिकास्तद्विपर्ययात् ॥ १०० ॥
आज्ञासिद्धमिदं कौलमनाचाराद्विनश्यति।
आचारपालनात्सत्यमाज्ञासिद्धिर्भविष्यति ॥ १०१ ॥
नाभिषेको न मंत्रो वा न शास्त्रपठनादिकम्।
कारणं कुलधर्मस्य सदाचारः कुलेश्वरि! ॥ १०२ ॥
बालाश्रीपादुकातत्त्वत्रयाचारादिवासनाम्।
यो वेत्ति समयी स स्यात्कौलिकश्चापि शांभवि! ॥ १०३ ॥
तावन्न कौलिको देवि! यावन्न समयीकृतः।
देहपाते विमोक्षः स्यात्समयाचारपालनात् ॥ १०४ ॥
संस्कारेण विहीनत्वाद्गुरुवाक्यस्य लंघनात्।
आचारवर्जनाद्देवि! कौलिकः पतितो भवेत् ॥ १०५ ॥

नित्यं नैमित्तिकं काम्यं मंत्रतंत्रादिलोपनम् ।
अनर्हपशुदुःसंगं मंत्रसांकर्यसंभवम् ॥ १०६ ॥
गुप्तप्रकटसंभूतं ज्ञानाज्ञानकृतं प्रिये! ।
एवमादिषु दोषेषु पापस्य गुरुलाघवम् ॥ १०७ ॥
देशं कालं च यो वेत्ति सम्यक् ज्ञात्वा यथाविधि ।
प्रायश्चित्तं गुरुर्दद्यात्सर्वपापविशुद्धये ॥ १०८ ॥
शिष्योऽपि देवि ! तत्प्रोक्तं प्रायश्चित्तं समाचरेत् ।
अथवा सर्वपापानां गुरोर्नामजपस्मृतिः ॥ १०९ ॥
जांबूनदस्य कलुषं परं शुद्धं यथाग्निना ।
अनाचारस्य मालिन्यं प्रायश्चित्ताग्निना दहेत् ॥ ११० ॥
बहुनात्र किमुक्तेन रहस्यं शृणु पार्वति ! ।
वर्णाश्रमाणां सर्वेषामाचारः सद्गतिप्रदः ॥ १११ ॥
गुरुस्त्रिवारमाचारं कथयेत्कुलनायिके ! ।
तन्न गृह्णाति शिष्यश्चेत्तदा पापं गुरोर्न हि ॥ ११२ ॥
मंत्रिदोषश्च राजानं जायादोषः पतिं यथा ।
तथा प्राप्नोत्यसंदेहः शिष्यपापं गुरुः प्रिये ! ॥ ११३ ॥
इति ते कथितः किंचित्समासेन वरानने ! ।
कुलाचारविधिर्देवि ! किं भूयः श्रोतुमिच्छसि ॥ ११४ ॥

सौभाग्यरत्नाकरेऽपि—

प्रतिग्रहं न गृह्णीयादात्मभोगविवित्सया ।
देवतागुरुपूजार्थं यत्नतोऽप्यर्जयेद्धनम् ॥ १ ॥
अनिर्वाहे तु कार्यस्य यदर्थं शपथः कृतः ।
प्रायश्चित्तजपो देवि ! सहस्रं स्वमनोस्ततः ॥ २ ॥

लोकोद्वेगकरी या च या च मर्मनिकृंतनी ।
स्थित्युद्वेगकरी या च तां गिरं नैव भाषयेत् ॥ ३ ॥

शिवशंभुः—

न निंदेत्कारणं देवं न शास्त्रं तेन निर्मितम् ।
न गुरुं साधकं चैव लिंगच्छायां न लंघयेत् ॥ १ ॥

इति समयाचारविधिः ॥

गोभ्वद्रींदुमिते शाके १७१९ माधवस्य सिते दले ।
एकादश्यां गुरुदिने दीक्षाप्रकाशिका कृता ॥ १ ॥

इति श्रीसत्यानंदनाथगुरुचरणप्रसादेन श्रीविष्णुभट्टवि-रचितायां दीक्षाप्रकाशिकायां पादुकाभक्तिकथनं नाम द्वा-दशः प्रकाशः ॥



# अष्टांगसिद्धिपंचांगम् ।

॥ श्रीगुरुगणपतीष्टकुलदेवताभ्यो नमः ॥

## अथाष्टांगक्रमार्थमहर्गणानयनं सौभाग्यरत्नाकरे ।

नंदाद्रींदुगुणै३१७९र्युतो गतकलिः पक्षेंदु१२संवर्धितो
युक्तोऽसौ मधुराद्यकैस्त्रि३विघ्नतः खाश्वै७०र्हृतैः संयुतः ।
देवै३३राप्तफलैर्युतो नभगुणै३०र्वृद्धः सतिथ्या त्रिधा-
ऽधोऽष्टौशून्यनगा७०८प्तियुगश्रुतिरसै६४र्लब्धावमैरूनकः ॥१॥

---

१ अहर्गणानयनं तन्त्रांतरे—

अथ वक्ष्ये विस्तरेण पारायणविधिं परम् ।
यस्य विज्ञानमात्रेण साक्षात्परशिवो भवेत् ॥ १ ॥
कालस्वरूपमज्ञात्वा सिद्धये यो मनुं जपेत् ।
कोटिकोटिजपेनापि सिद्धिस्तस्य न जायते ॥ २ ॥
कालस्वरूपविज्ञानमहर्गणविधानतः ।
अष्टांगक्रमसंप्राप्तिर्नाल्पस्य तपसः फलम् ॥ ३ ॥
उच्यते प्रथमं तत्र सिद्धकल्याद्यहर्गणः ।
अष्टांगक्रमसंप्राप्तिर्येन तात्कालिकी भवेत् ॥ ४ ॥
नभर्तू६० शरपक्ष२५घ्नौ गतवत्सरमिश्रितौ ।
नवांबरधरा१०९युक्तौ भवेयुः शकवत्सराः ॥ ५ ॥
षष्टि६०पूतौ तु चक्रांकेष्वेकमेवं नियोजयेत् ।
तेनैव खरसा६०हन्युः शेषं पूर्ववदेव हि (?) ॥ ६ ॥

२ गतमासैः । :

खराम३०युक्तो हीनो वा सैको वापि निरेकक: ।
सुधियाऽहर्गण: कार्यो यदि वारो न लभ्यते ॥ २ ॥
एवं संसिद्धमुनिभिस्तंत्रविद्भिः स्फुटीकृतः ।
सप्त७तष्टोऽपि शुक्रादिः स्यात्प्रतीतावहर्गणः ॥ ३ ॥

तंत्रांतरेऽपि—

नंदसप्तकुगुणान्वितशाको३१७९
जायते कलियुगं रवि१२गुण्यम् ।
यातमाससहितं त्रिविधाऽधः
खाश्व७०लब्धममरा३३सियुतं तत् ॥ ४ ॥
पूर्णराम३०गुणितं गततिथ्या
संयुतं त्रिरहिपूर्णनगा७०८प्त्या ।
युक्तमब्धिरस६४लब्धविहीनं
स्याद्भृगोर्दिनगणं कुतले च ॥ ५ ॥

अन्यत्रापि ।

शको नवाद्रींदुकृशानु३१७९ युक्तः
कलेर्भवेदब्दगणः सुवृत्तः ॥ ६ ॥

कल्याद्यब्दगणः प्रभाकर१२हतश्चैत्रादिमासैर्युत-
स्त्रिस्थः खाद्रि७०हतासयुक् सुर३३हृतैर्लब्धाधिमासैर्युतः ।
खत्रिघ्नः३० सतिथिर्द्विधा शिव११हतस्त्रिव्योमशैलो७०३द्धृतै-
र्हीनो लब्धदिनावमैः सितेनिशार्धे सावनोऽहर्गणः ॥ ७ ॥

१ चैत्रादिगतमासैरित्यर्थः । २ शुक्रवारनिशार्धादिरित्यर्थः ।

## सौभाग्यतंत्रे ।

उदये पंचभि५र्हृते नवभि९र्नव वासराः ।
षोडशभि[1]१६र्भवेन्नित्या ख०शेषे प्रथमा भवेत् ॥ ८ ॥

## युगादिज्ञानम् ।

अथाधुना युगादीनां ज्ञानं संकथ्यते मया ।
अंगांकाब्ध्यर्तुवेदाश्वै[2]७४६४९६र्हृते तु युगसंततिः ॥ ९ ॥
तच्छेषेऽङ्गत्र्यश्वपूर्णपक्षै२०७३६र्भक्ते परिवृत्तिः ।
शेषे रसाद्रीषु५७६ हृते वर्षाणि तद्गतानि च ॥ १० ॥
वर्षशेषं रसगुणै३६र्भक्तं मासास्तु ते गताः ।
मासशेषं क्रमाज्ज्ञेयं [3]दिनं शून्यादितो भवेत् ॥ ११ ॥
एवमष्टांगसंसिद्धिरसाचात्कालिकी स्मृता ।
नक्षत्रयोगसंसिद्धिः प्रोक्ता संकल्पवाचने ॥ १२ ॥
शेषमष्टांगकं ज्ञेयं पारायणविदां वरैः ।
अंर्कांकशरसंभिन्ना राशिकरणखेचराः ॥ १३ ॥
पंचभूताश्च तज्ज्ञानं स्यादक्षां गणकैः सदा ।
इति ज्ञात्वा श्रीमतां च विनियोगं समाचरेत् ॥ १४ ॥
तकारः परिवृत्तिश्च खं महायुगमुच्यते ।
वर्षाक्षराणि षट्त्रिंशदकारादीन्युदीरयेत् ॥ १५ ॥
मासाश्च षोडश प्रोक्ताः स्वराणां षोडशादितः ।
मासस्य दिनसंख्या तु षट्त्रिंशच्च प्रकीर्तिता ॥ १६ ॥

---

१ षोडशभिः षोडशाख्या नित्यापर्यायनामकाः इति पाठः । २ षट्त्रिंशद्भि३६र्हृते तद्वद्भवेत्तद्युगयोगकम् इत्यधिकमेकस्मिन् पुस्तके । ३ दिननित्यांकशेषतः इति पाठः ।

अकारादिक्षकारांताः षट्त्रिंशद्दिनसंततिः ।
नित्याश्च षोडश प्रोक्ताः षोडशस्वरसंस्थिताः ॥ १७ ॥
कामेश्वर्यादिचित्रांता सर्वांते षोडशी भवेत् ।
पर्यायक्रमतो ज्ञेयमिति शास्त्रस्य डिंडिमः ॥ १८ ॥
वाराक्षरमथो वक्ष्ये नववर्गाद्यवर्णकान् ।
अलकचटतपयशा नित्यं त्वेवं विनिर्दिशेत् ॥ १९ ॥
नव वारा इति ज्ञेया नवनाथात्मकाः क्रमात् ।
मासे मासे तु वाराणां चतुरावृत्तिरीरिता ॥ २० ॥
घटिकाश्चाथ विज्ञेयाः षष्टिसंख्या दिने दिने ।
पंचाशन्मातृकानां च विभागः पंचधा भवेत् ॥ २१ ॥

अकाराद्या ङकाररहिता ज्ञेयाः ।

अएचतयनामानो वर्गाः स्युश्च क्रमात्ततः ।
यस्मिन्दिने तु यो वर्णो ज्ञात्वा तद्धटिकोदयम् ॥ २२ ॥
तदादि गणयेत् धीमानाद्यवर्गं जपेत्पुनः । इति ।

## अथ चतुरंगक्रमः ।

तारत्रयं मूलविद्यां वर्षमासदिनोदयात् ।
संयोज्य चतुरंगाख्यो विधिरेष सुसिद्धिदः ॥ २३ ॥

---

१ इदमेकस्मिन्पुस्तके नास्ति ।

२ प्रह्लादानंदनाथाख्यं सकलानंदमेव च ।
कुमारानंदनाथं च वसिष्ठानंदनाथकम् ॥ १ ॥
क्रोधानंदसुरानंदौ ध्यानानंदं ततः परम् ।
बोधानंदशुकानंदौ ध्यायेदेवं कुलोपरि ॥ २ ॥
इति श्लोकद्वयमधिकमेकस्मिन्पुस्तके ।

वारश्च घटिका चैव दिननित्या तथैव च ।
वर्षमासयुगाश्चांते परिवृत्तिरिति क्रमात् ॥ २४ ॥
प्रोक्तोऽष्टांगक्रमश्चायं भृग्वाद्यैः समुपासितः ।
जपार्चनविधौ ज्ञेयाः शक्तयोऽष्टौ सुसिद्धिदाः ॥ २५ ॥
पुष्पिणी च कुमारी च मोहिनी विमला तथा ।
जयिनी श्रीकरी चैव पर्वाण्येतानि षट् क्रमात् ॥ २६ ॥
पुष्पिणी वर्षमासाभ्यां मासं दिनं कुमारिका ।
वर्षं दिनं मोहिनी च विमला मासकोदयात् ॥ २७ ॥
वर्षोदयाभ्यां जयिनी दिनोदयाभ्यां श्रीकरी ।
इत्येवं पर्वषट्कं स्यात्सोमपानमथो ब्रुवे ॥ २८ ॥
वर्षं मासं तथा प्रोक्तं पक्षं चोदयमेव च ।
सोमपानमिदं प्रोक्तं बुधैरागमवेदिभिः ॥ २९ ॥
वर्षं दिनं चोदयं च वारं मासं तथैव च ।
वर्षपंचकसंयोगजपः सूर्योपरागकः ॥ ३० ॥

इत्यष्टांगक्रमः संपूर्णः ।

---

१ युगः परिवृत्तिश्चैव वर्षमासदिनानि च ।
नित्यावारश्च घटिका क्रमादष्टांगकं भवेत् ॥ इति पाठः ।

## अथोदाहरणसाधनम् ।

प्रणम्य जानकीजानिं गणपं केशवं गुरुम् ।
अष्टांगसिद्धिपंचांगोदाहृतिः क्रियते स्फुटा ॥ १ ॥

स्वस्तिश्रीसंवत् १९६४ आषाढादिसंवत् १९६५ शाके १८३० व्यतीते काले आश्विनसुदि १ प्रतिपदि शनौ अत्र दिनेऽष्टांगसिद्धिपंचांगसाधनार्थं गणितारंभः ॥

शकः १८३० नवाद्रींदुकृशानु३१७९युक्तो जातः कल्याद्यब्दगणः ५००९प्रभाकर१२हतो जातो मासगणः सावनः६०१०८ चैत्रादिगतमासै६र्युतः६०११४ त्रिस्थस्तन्मध्येऽधः खाद्रि७०हृताल्लब्धं८५८ अनेन युक्तो मध्यस्थो६०११४ मासगणः६०९७२ अयं सुरै३३र्हृतो लब्धा अधिमासाः१८४७ एभिः प्रथमस्थो ६०११४ मासगणो युक्तो जातश्चांद्रमासगणः६१९६१ अयं खत्रि३०घ्नो जाताश्चांद्रतिथ्यः १८५८८३०गततिथ्या० युताः१८५८८३०द्विधा स्थाप्याः । अधः शिव११हते जातं२०४४७१३०त्रिव्योमशैलै७०३र्हृते जातान्यवमानि २९०८५ एभिर्हीनाः प्रथमस्थाः१८५८८३०जातोऽहर्गणः सावनः १८२९७४५ अयं सप्तभि७र्भक्तः शेषं १ "सितनिशार्धे" इत्युक्तत्वात् शनिवारः ।

## अथ वारसाधनम् ।

### "नवभिर्नव वासराः"

अस्यार्थः—अहर्गणे नवभिर्भक्ते शेषं वासरः शून्यशेषे प्रथमवासरः उदाहरणं अहर्गणः१८२९७४५अयं नवभि९र्भक्तः शेषं०शून्यं । शून्यशेषे प्रह्लादानंदनाथनामा वासरः

| संज्ञा | वारनामानि | तंत्रांतरे वारनामानि |
|---|---|---|
| ० अ | प्रह्लादानंदनाथः | प्रकाशानंदः |
| १ ल | सकलानंदनाथः | विमर्शानंदः |
| २ क | कुमारानंदनाथः | आनंदानंदः |
| ३ च | वसिष्ठानंदनाथः | ज्ञानानंदः |
| ४ ट | क्रोधानंदनाथः | सत्यानंदः |
| ५ त | सुरानंदनाथः | पूर्णानंदः |
| ६ प | ध्यानानंदनाथः | स्वभावानंदः |
| ७ य | बोधानंदनाथः | प्रतिभानंदः |
| ८ श | शुकानंदनाथः | सुभगानंदः |

## अथ नित्यासाधनम् ।

"षोडशभिर्भवेन्नित्या खशेषे प्रथमा भवेत्"

अस्यार्थः—अहर्गणे षोडशभि १६ र्भक्ते शेषं नित्या स्यात् । शून्यशेषे प्रथमा ज्ञेया ।

अहर्गणः १८२९७४५ षोडशभिर्भक्तः शेषं १ एकशेषे आ—संज्ञिका कपालिनीनाम्नी नित्या

| संज्ञा | नित्यानामानि | तंत्रांतरे नामानि |
|---|---|---|
| ० अ | काली | कामेश्वरी |
| १ आ | कपालिनी | भगमालिनी |

१ श्रीमद्देशिकेंद्रभास्कररायप्रणीतसौभाग्यभास्कराख्यभाष्ये ( श्लो० २९६ ) तथैव वामकेश्वरतंत्रांतर्गतनित्याषोडशिकार्णवे प्रथमपटले श्लो० २७ च समुपलभ्यन्ते नित्यानामानीमानि, दक्षिणकालिकोपासकानां काल्याद्यसितांतानि नित्यानामानि, तथैवान्यासां बालात्रिपुरसुंदरी–महात्रिपुरसुंदरी–ललिताम्बोपासकान कामेश्वर्याद्यानि नित्यानामानीति सांप्रदायिकोक्तिः । एवं वारेऽप्यूहनीयम् ।

| | | | |
|---|---|---|---|
| २ | इ | कुल्ला | नित्यक्लिन्ना |
| ३ | ई | कुरुकुल्ला | भेरुंडा |
| ४ | उ | विरोधिनी | वह्निवासिनी |
| ५ | ऊ | विप्रचित्ता | महावज्रेश्वरी |
| ६ | ऋ | उग्रा | शिवदूतिका |
| ७ | ॠ | उग्रप्रभा | त्वरिता |
| ८ | ऌ | दीप्ता | कुलसुंदरी |
| ९ | ॡ | नीला | नित्या |
| १० | ए | घना | नीलपताका |
| ११ | ऐ | बलाका | विजया |
| १२ | ओ | मात्रा | सर्वमंगला |
| १३ | औ | मुद्रा | ज्वालामालिनी |
| १४ | अं | मिता | चित्रा |
| १५ | अः | असिता | श्रीः ( त्रिपुरसुंदरी ) |

## अथ युगसाधनम् ।

"अंगांकाऽध्यर्तुवेदाश्वै७४६४९६र्हृते तु युगसंततिः"

अस्यार्थः—अहर्गणे अंगांकाऽध्यर्तुवेदाश्वैर्भक्ते लब्धं युगः ककारादिर्दृश्यते

उदाहरणं—अहर्गणः १८२९७४५अंगांकाऽध्यर्तुवेदाश्वैर्भक्ते लब्धं २, द्वि २ लब्धे ख–संज्ञको युगः शेषं ३३६७५३

## अथ परिवृतिसाधनम् ।

"तच्छेषेऽङ्गत्र्यश्वपूर्णपक्षै२०७३६र्भक्ते परिवृतिः"

अस्यार्थः—युगशेषे अंगत्र्यश्वपूर्णपक्षैर्भक्ते लब्धं परिवृतिः—ककारादिः ।

उदाहरणं—युगशेषं३३६७५३ अंगत्र्यश्वपूर्णपक्षैर्भक्ते लब्धं१६षोडशलब्धे त–संज्ञकपरिवृतिः शेषं ४९७७

## अथ वर्षसाधनम् ।

"शेषे रसाद्रीषु५७६हृते वर्षाणि तद्गतानि च"

अस्यार्थः—परिवृतिशेषे रसाद्रीषुभिर्भक्ते लब्धं गतवर्षाणि, दिनसाधने यानि षट्त्रिंशदक्षराणि तान्येवाऽक्षराणि ( अकारादीनि षट्त्रिंशत् )

उदाहरणं—परिवृतिशेषे४९७७ रसाद्रीषुभिर्भक्ते लब्धं ८ अष्टौ । अष्ट लब्धे ज–संज्ञकं वर्षं ज्ञेयम् । शेषम्३६९

## अथ माससाधनम् ।

"वर्षशेषे रसगुणै३६र्भक्ते मासास्तु ते गताः"

अस्यार्थः—वर्षशेषे षट्त्रिंशद्भिर्भक्ते लब्धं गतमासाः ( ते च अकारादिषोडशस्वराः )

उदाहरणं—वर्षशेषं ३६९ षट्त्रिंशद्भिर्भक्तं लब्धं१० दशलब्धे वर्तमान-ए-संज्ञकमासः शेषं ९

## अकारादिषोडशस्वरा यथा ।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ |
| अ | आ | इ | ई | उ | ऊ | ऋ | ॠ |
| ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ |
| ऌ | ॡ | ए | ऐ | ओ | औ | अं | अः |

## अथ दिनसाधनम् ।

### "मासशेषं क्रमाज्ज्ञेयं दिनं"

अस्यार्थः—मासशेषमेव गतदिनं, शून्यशेषे प्रथमदिनं ज्ञेयम् । उदाहरणं—मासशेषं ९ नवशेषे झ–संज्ञक 'काल'नामकदिनं ज्ञेयम् ।

## षट्त्रिंशद्दिनानि यथा ।

| संज्ञा | | नामानि | संज्ञा | | नामानि |
|---|---|---|---|---|---|
| १ | अ | शिवः | १९ | द | चक्षुः |
| २ | क | शक्तिः | २० | ध | जिह्वा |
| ३ | ख | सदाशिवः | २१ | न | घ्राणः |
| ४ | ग | ईश्वरः | २२ | प | वाक् |
| ५ | घ | शुद्धविद्या | २३ | फ | पाणिः |
| ६ | ङ | माया | २४ | ब | पादः |
| ७ | च | कला | २५ | भ | पायुः |
| ८ | छ | विद्या | २६ | म | उपस्थः |
| ९ | ज | रागः | २७ | य | शब्दः |
| १० | झ | कालः | २८ | र | स्पर्शः |
| ११ | ञ | नियतिः | २९ | ल | रूपं |
| १२ | ट | पुरुषः | ३० | व | रसः |
| १३ | ठ | प्रकृतिः | ३१ | श | गंधः |
| १४ | ड | अहंकारः | ३२ | ष | आकाशः |
| १५ | ढ | बुद्धिः | ३३ | स | वायुः |
| १६ | ण | मनः | ३४ | ह | तेजः |
| १७ | त | श्रोत्रं | ३५ | ळ | सलिलं |
| १८ | थ | त्वग् | ३६ | क्ष | भूमिः |

## अथ घटिकासाधनम् ।

### “उदये पंचभिर्हृते”

अस्यार्थः—अहर्गणे पंचभि५र्भक्ते शेषं घटिकोदयं ज्ञेयम् । उदाहरणं । अहर्गणः१८२९७४५पंचभिर्भक्तः शेषं ० शून्यशेषे (अ) संज्ञिकं घटिकोदयम्

### ङकाररहिताघटिकायाः संज्ञा ।

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| ० | अ | आ | इ | ई | उ | ऊ | ऋ | ॠ | ऌ | ॡ |
| १ | ए | ऐ | ओ | औ | अं | अः | क | ख | ग | घ |
| २ | च | छ | ज | झ | ञ | ट | ठ | ड | ढ | ण |
| ३ | त | थ | द | ध | न | प | फ | ब | भ | म |
| ४ | य | र | ल | व | श | ष | स | ह | ळ | क्ष |

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| १ | अ | ११ | ए | २१ | च | ३१ | त | ४१ | य | ५१ |
| २ | आ | १२ | ऐ | २२ | छ | ३२ | थ | ४२ | र | ५२ |
| ३ | इ | १३ | ओ | २३ | ज | ३३ | द | ४३ | ल | ५३ |
| ४ | ई | १४ | औ | २४ | झ | ३४ | ध | ४४ | व | ५४ |
| ५ | उ | १५ | अं | २५ | ञ | ३५ | न | ४५ | श | ५५ |
| ६ | ऊ | १६ | अः | २६ | ट | ३६ | प | ४६ | ष | ५६ |
| ७ | ऋ | १७ | क | २७ | ठ | ३७ | फ | ४७ | स | ५७ |
| ८ | ॠ | १८ | ख | २८ | ड | ३८ | ब | ४८ | ह | ५८ |
| ९ | ऌ | १९ | ग | २९ | ढ | ३९ | भ | ४९ | ळ | ५९ |
| १० | ॡ | २० | घ | ३० | ण | ४० | म | ५० | क्ष | ६० |
| घटिका | संज्ञा | घ. | सं. | घ. | सं. | घ. | सं. | घ. | सं. | घ. |

यस्मिन्दिने गणितागतं घटिकोदयं समागतं तस्मादनुक्रमेण षष्टिघटिकोर्ध्वलिखितचक्रे तिथिर्ज्ञातव्या । अस्मिन् अष्टांगसिद्धिपंचांगें

षष्टि६० घटिकात्मकं दिनं न न्यूनाधिकघटिकात्मकं । तिथिक्षयवृद्धी च न स्तः । षट्त्रिंशद्दिनात्मक एव मासः ।

षोडशमासात्मकं वर्षं । क्षयवर्षाधिकमासक्षयमासाश्च न संति ।

वर्षदिनप्रमाणं ५७६ षट्त्रिंशद्वर्षाणामेका परिवृतिः परिवृतिदिनप्रमाणं२०७३६ । षट्त्रिंशत्परिवृतीनामेकं युगम् । युगवर्षप्रमाणं १२९५ युगदिनप्रमाणं ७४६४९६

संवत्१९६४आषाढादिसंवत्१९६५ शाके१८३० व्यतीते काले आश्विनसुदि प्रतिपदि १ शनौ अहर्गणः १८२९७४५

युगे—परिवर्ते—वर्षे—मासे—वारे—घटिकोदये—दिने—
ख. त. ज. ए. अ. अ. झ.

प्रह्लादा— कालनाम
नंदनाथः के—

नित्यायाम्
आ.
कपालिनी.

संकल्पप्रकारो यथा—

अस्मिन् देवीमातृकामाने ख—युगे, त—परिवर्ते, ज—वर्षे, ए—मासे, अ—प्रह्लादानंदनाथवासरे अ—घटिकोदये, झ—कालनामकदिने, आ—नित्यायां श्री०।०००।०।(अमुकीमहाविद्या) प्रीत्यर्थं जपे विनियोगः ॥

स्वस्तिश्रीमद्भूपतिवीरविक्रमादित्यस्य राज्यसमयातीतसंवत्१९६५ वर्षेऽस्मिन्नृपाच्छालिवाहनराज्यकृते शाके१८३१व्यतीते काले वैशाखसुदि प्रतिपदि १ सौम्यवासरे अष्टांगसिद्धिपंचांगसाधनार्थं गणितारंभः । अस्मिन् दिने नूतनवर्षारंभः ॥

तत्रादावहर्गणसाधनं—शकः १८३१ नवाद्रींदुकृशानु३१७९युक्तो जातः कल्याद्यब्दगणः५०१० प्रभाकर१२हतो जातो मासगणः सावनः ६०१२० चैत्रादिगतमासेन१युतः६०१२१ त्रिस्थस्तन्मध्येऽधः खाद्रि७०हृताल्लब्धं ८५८ अनेन युक्तो मध्यस्थो६०१२१जातो मासगणः ६०९७९ अयं सुरै३३र्हृतो लब्धा अधिमासाः १८४७ एभिः प्रथमस्थो ६०१२१मासगणो युक्तो जातश्चांद्रमासगणः६१९६८ अयं खत्रि३० घ्नो जाताश्चांद्रतिथ्यः१८५९०४० गततिथ्या० युक्ताः १८५९०४० द्विधा स्थाप्याः। अधः शिव११हते जातं २०४४९४४० त्रिव्योमशैलै-७०३र्हृते जातान्यवमानि२९०८८एभिर्हीनाः प्रथमस्थाः१८५९०४० जातोऽहर्गणः सावनः१८२९९५२ अयं सप्तभि७र्भक्तः शेषं५ "सित-निशार्घे" इत्युक्तत्वात् बुधवासरः।

स्वस्तिश्रीसंवत्१९६५शाके१८३१व्यतीते काले वैशाखसुदि १प्र-तिपदि बुधवासरे नूतनवर्षारंभः। तद्दिने कल्याद्यहर्गणः१८२९९५२ अस्मात्पूर्वोक्तरीत्या साधितमष्टांगसिद्धिपंचांगं

युगे—परिवर्ते—वर्षे—मासे—वारे—घटिकोदये

ख. त. झ. अ. अ. च.

प्रह्लादानंद=

दिने नित्यायाम्=नाथः

अ. अ.

शिवः काली

संकल्पप्रकारो यथा—अस्मिन् देवीमातृकामाने खयुगे, तपरिवर्ते, झवर्षे, अमासे, अप्रह्लादानंदनाथवासरे, च घटिकोदये, अशिवनाम्नि दिने अकालिनाम्न्यां नित्यायां, श्री०००अमुकीमहाविद्याप्रीत्यर्थं जपे विनियोगः।

## अथ पंचांगलेखनप्रकारो लिख्यते ।

संवत् १९६५ शाके १८३१ व्य. वैशाखसुदि १ प्रतिपदि बुधे वर्षारंभः ।

| तिथिः | वारः | संज्ञा | वारनामानि | घटिकोदयः | दिनसंज्ञा | दिननामानि | नित्यासंज्ञा | नित्यानामानि |
|---|---|---|---|---|---|---|---|---|
| वै. सु. १ | बु | अ | प्रह्लादानंदनाथः | च | अ | शिवः | अ | काली |
| २,३ | गु | ल | सकलानंद | त | क | शक्तिः | आ | कपालिनी |
| ४ | शु | क | कुमारानंद | य | ख | सदाशिवः | इ | कुल्ला |
| ५ | श | च | वसिष्ठानंद | अ | ग | ईश्वरः | ई | कुरुकुल्ला |
| ६ | र | ट | क्रोधानंद | ए | घ | शुद्धविद्या | उ | विरोधिनी |
| ७ | चं | त | सुरानंद | च | ङ | माया | ऊ | विप्रचित्ता |
| ८ | मं | प | ध्यानानंद | त | च | कला | ऋ | उग्रा |
| ९ | बु | य | बोधानंद | य | छ | विद्या | ॠ | उग्रप्रभा |
| ९ | गु | श | शुक्रानंद | अ | ज | रागः | ऌ | दीप्ता |
| १० | शु | अ | प्रह्लादानंद | ए | झ | कालः | ॡ | नीला |
| ११ | श | ल | सकलानंद | च | ञ | नियतिः | ए | घना |
| १२ | र | क | कुमारानंद | त | ट | पुरुषः | ऐ | बलाका |
| १३ | चं | च | वसिष्ठानंद | य | ठ | प्रकृतिः | ओ | मात्रा |
| १४ | मं | ट | क्रोधानंद | अ | ड | अहंकारः | औ | मुद्रा |
| १५ | बु | त | सुरानंदना | ए | ढ | बुद्धिः | अं | मिता |

| तिथिः | वारः | संज्ञा | वारनामानि | घटिका-वृत्तः | दिन-संज्ञा | दिननामानि | नित्यासंज्ञा | नित्यानामानि |
|---|---|---|---|---|---|---|---|---|
| व. १ | गु | प | ध्यानानंद | च | ण | मनः | अः | असिता |
| २ | शु | य | बोधानंद | त | त | श्रोत्रं | अ | काली |
| ३ | श | श | शुकानंद | य | थ | त्वग् | आ | कपालिनी |
| ४ | र | अ | प्रह्लादानंद | अ | द | चक्षुः | इ | कुल्ला |
| ५ | चं | ल | सकलानंद | ए | ध | जिव्हा | ई | कुरुकुल्ला |
| ६ | मं | क | कुमारानंद | च | न | घ्राणः | उ | विरोधिनी |
| ७ | बु | च | वसिष्ठानंद | त | प | वाक् | ऊ | विप्रचित्ता |
| ८ | गु | ट | क्रोधानंद | य | फ | पाणिः | ऋ | उग्रा |
| ९,१० | शु | त | सुरानंद | अ | ब | पादः | ॠ | उग्रप्रभा |
| ११ | श | प | ध्यानानंद | ए | भ | पायुः | ऌ | दीप्ता |
| १२ | र | य | बोधानंद | च | म | उपस्थः | ॡ | नीला |
| १३ | चं | श | शुकानंद | त | य | शब्दः | ए | घना |
| १४ | मं | अ | प्रह्लादानंद | य | र | स्पर्शः | ऐ | बलाका |
| ३० | बु | ल | सकलानंद | अ | ल | रूपं | ओ | मात्रा |
| ज्ये.सु.१ | गु | क | कुमारानंद | ए | व | रसः | औ | मुद्रा |
| २ | शु | च | वसिष्ठानंद | च | श | गंधः | अं | सिता |
| ३ | श | ट | क्रोधानंद | त | ष | आकाशः | अः | असिता |
| ४ | र | त | सुरानंद | य | स | वायुः | अ | काली |

| तिथिः | वारः | संज्ञा | वारनामानि | घटिकाः दृष्टः | दिन संज्ञा | दिननामानि | नित्या संज्ञा | नित्यानामानि |
|---|---|---|---|---|---|---|---|---|
| ५ | चं | प | ध्यानानंद | अ | ह | तेजः | आ | कपालिनी |
| ६ | मं | य | बोधानंद | ए | ळ | सलिलं | इ | कुल्ला |
| ७ | बु | श | शुकानंद | च | क्ष | भूमिः | ई | कुरुकुल्ला |

संवत् १९६५ शाके १८३१ व्य. ज्येष्ठसुदि ८ गुरौ द्वितीयमासारंभः ।

तत्राहर्गणः युगे-परिवर्ते वर्षे मासे

१८२९९८८ ख—त—झ—आ—

| तिथिः | वारः | संज्ञा | वारनामानि | घटिकाः दृष्टः | दिन संज्ञा | दिननामानि | नित्या संज्ञा | नित्यानामानि |
|---|---|---|---|---|---|---|---|---|
| ८ | गु | अ | प्रह्लादानंद | त | अ | शिवः | उ | विरोधिनी |
| ९ | शु | ऌ | सकलानंद | य | क | शक्तिः | ऊ | विप्रचित्ता |
| १० | श | क | कुमारानंद | अ | ख | सदाशिवः | ऋ | उग्रा |
| ११ | र | च | वसिष्ठानंद | ए | ग | ईश्वरः | ॠ | उग्रप्रभा |
| १२ | चं | ट | क्रोधानंद | च | घ | शुद्धविद्या | ऌ | दीप्ता |
| १३ | मं | त | सुरानंद | त | ङ | माया | ॡ | नीला |
| १४ | बु | प | ध्यानानंद | य | च | कला | ए | घना |
| १४ | गु | य | बोधानंद | अ | छ | विद्या | ऐ | बलाका |
| १५ | शु | श | शुकानंद | ए | ज | रागः | ओ | मात्रा |

| तिथिः | वारः | संज्ञा | वारनामानि | घटिकाकूटः | दिन संज्ञा | दिननामानि | नित्या संज्ञा | नित्यानामानि |
|---|---|---|---|---|---|---|---|---|
| व १/२ | श | अ | प्रह्लादानंद | च | झ | कालः | औ | मुद्रा |
| ३ | र | ल | सकलानंद | त | ञ | नियतिः | अं | मिता |
| ४ | चं | क | कुमारानंद | य | ट | पुरुषः | अः | सिता |
| ५ | मं | च | वसिष्ठानंद | अ | ठ | प्रकृतिः | अ | काली |
| ६ | बु | ट | क्रोधानंद | ए | ड | अहंकारः | आ | कपालिनी |
| ७ | गु | त | सुरानंद | च | ढ | बुद्धिः | इ | कुल्ला |
| ८ | शु | प | ध्यानानंद | त | ण | मनः | ई | कुरुकुल्ला |
| ९ | श | य | बोधानंद | य | त | श्रोत्रं | उ | विरोधिनी |
| १० | र | श | शुक्रानंद | अ | थ | त्वग् | ऊ | विप्रचित्ता |
| ११ | चं | अ | प्रह्लादानंद | ए | द | चक्षुः | ऋ | उग्रा |
| १२ | मं | ल | सकलानंद | च | ध | जिह्वा | ॠ | उग्रप्रभा |
| १३/१४ | बु | क | कुमारानंद | त | न | घ्राणः | ऌ | दीप्ता |
| ३० | गु | च | वसिष्ठानंद | य | प | वाक् | ॡ | नीला |
| आ.सु.१ | शु | ट | क्रोधानंद | अ | फ | पाणिः | ए | घना |
| २ | श | त | सुरानंद | ए | ब | पादः | ऐ | बलाका |
| ३ | र | प | ध्यानानंद | च | भ | पायुः | ओ | मात्रा |
| ४ | चं | य | बोधानंद | त | म | उपस्थः | औ | मुद्रा |
| ५ | मं | श | शुक्रानंद | य | य | शब्दः | अं | सिता |

| तिथिः | वाराः | संज्ञा | वारनामानि | दृष्टिकूटाः | दिन संज्ञा | दिननामानि | नित्या संज्ञा | नित्यानामानि |
|---|---|---|---|---|---|---|---|---|
| ५ | वु | अ | प्रह्लादानंद | अ | र | स्पर्शः | अः | सिता |
| ६ | गु | ल | सकलानंद | ए | ल | रूपं | अ | काली |
| ७ | गु | क | कुमारानंद | च | व | रसः | आ | कपालिनी |
| ८ | श | च | वसिष्ठानंद | त | श | गंधः | इ | कुल्ला |
| ९ | र | ट | क्रोधानंद | य | ष | आकाशः | ई | कुरुकुल्ला |
| १० | चं | त | सुरानंद | अ | स | वायुः | उ | विरोधिनी |
| ११ | मं | प | ध्यानानंद | ए | ह | तेजः | ऊ | विप्रचित्ता |
| १२ | वु | य | वोधानंद | च | ळ | सलिलं | ऋ | उग्रा |
| १३ | गु | श | शुकानंद | त | क्ष | भूमिः | ॠ | उग्रप्रभा |

शाके१८३१व्य. प्रथमश्रावणवदिपंचम्यां भृगौ
तृतीयमासारंभेऽहर्गणः सावनः१८३००२४
शाके१८३१व्य. द्वितीयश्रावणवदिद्वादश्यां शनौ
चतुर्थमासारंभे सावनोऽहर्गणः१८३००६०
शाके१८३१व्य. आश्विनसुदितृतीयायां भानौ पंचममासारंभे
सावनोऽहर्गणः१८३००९६एवमग्रे ज्ञेयम्

रैकज्ञातीयविप्रेण श्रीसूर्यपुरवासिना ।
ज्योतिर्विदः केशवस्य सूनुना कृष्णशर्म्मणा ॥ १ ॥
अष्टांगसिद्धिपंचागोदाहृतिर्विदुषां मुदे ।
रचिता चापलं चात्र क्षमध्वं तत्कृपार्णवाः ! ॥ २ ॥ इति·

श्रीः

# कुलाकुलादिचक्रविचारः

## सूर्यपुरनिवासिना ज्योतिर्विदा कृष्णशंकर केशवरामेण संगृहीतः

माधवानंदसंन्यासिगुरुपादांबुजं शिवम् ।
नमस्कृत्य गणाधीशं केशवं च सरस्वतीम् ॥ १ ॥
आलोच्य तंत्रसारादीन् साधकानां हिताय च ।
कुलाकुलादिचक्राणि लिख्यंते कृष्णशर्मणा ॥ २ ॥

### आदौ कुलाकुलचक्रम्

अआएकचटतपयषा मारुताः ।
इईऐखछठथफरक्षा आग्नेयाः ।
उऊओगजडदबलळाः पार्थिवाः ।
ऋॠऔघझढधभवसा वारुणाः ।
ऌॡअंअःङञणनमशहा नाभसाः ।

| वायुः | अग्निः | भूमिः | जलं | आकाशः | |
|---|---|---|---|---|---|
| अआ | इई | उऊ | ऋॠ | ऌॡ | |
| ए | ऐ | ओ | औ | अंअः | |
| क | ख | ग | घ | ङ | |
| च | छ | ज | झ | ञ | |
| ट | ठ | ड | ढ | ण | |
| त | थ | द | ध | न | |
| प | फ | ब | भ | म | |
| य | र | ल | व | श | |
| ष | क्ष | ळ | स | ह | |

तथाच निबंधे-वाराहसंहितायाम्—

वाय्वग्निभूजलाकाशाः पंचाशल्लिपयः क्रमात् ।
पंच ह्रस्वाः पंच दीर्घाः बिंद्वंताः संधिसंभवाः ॥ १ ॥
पंचशः कादयः षक्षळसहांताः समीरिताः ।
साधकस्याक्षरं पूर्वं मंत्रस्यापि तदक्षरम् ॥ २ ॥
यद्येकभूतदैवत्यं जानीयात्स्वकुलं हि तत् ।
भौमस्य वारुणं मित्रमाग्नेयस्यापि मारुतम् ॥ ३ ॥
मारुतं पार्थिवानां च आग्नेयस्यांभसं रिपुः ।
नाभसं सर्वमित्रं स्याद्विरुद्धं नैव दृश्यते ॥ ४ ॥

इति कुलाकुलविचारः ।

## अथ राशिचक्रम्

आगमकल्पद्रुमे—

वां[३]लं[३] गौरं[२] खुरं[२] शोणं[५] शौं[५]मि[५] शो[५]भे[४]ति राशिषु ।
क्रमेण मेदिना वर्णाः कन्यायां शादयः स्मृताः ।

अस्मिन् श्लोके मेषादिराशीनां वर्णसंख्या दर्शिता सा चातीवगूढा, शब्दार्थविचारेण न स्फुरति श्लोकार्थः गुरुगम्यत्वात् । गुरुगम्यप्रकारेण श्लोकार्थो यथा कवर्ग, चवर्ग, टवर्ग, तवर्ग, पवर्ग, यवर्गाः—इति सुप्रसिद्धम्

कवर्गस्य ( कखगघङ ) इति पंचाक्षराणि ।
चवर्गस्य ( चछजझञ ) इति पंचाक्षराणि ।
टवर्गस्य ( टठडढण ) इति पंचाक्षराणि ।
तवर्गस्य ( तथदधन ) इति पंचाक्षराणि ।

पवर्गस्य ( पफबभम ) इति पंचाक्षराणि ।

यवर्गस्य ( यरलवशषसह ) इत्यष्टौ

शषसहळक्षाणां शवर्गसंज्ञा च कुत्रचित्पृथगुक्ता

यवर्गमध्ये वकारस्य चतुर्थत्वाच्चतुःसंख्यावाचको वकारस्तेन मेषराशेश्चत्वारो वर्णाः ।

यवर्गमध्ये लकारस्य तृतीयत्वाद्वृषभराशेस्त्रयो वर्णाः ।

कवर्गमध्ये गकारस्य तृतीयत्वान्मिथुनराशेस्त्रयो वर्णाः ।

यवर्गमध्ये रकारस्य द्वितीयत्वात्कर्कस्य द्वौ वर्णौ ।

कवर्गमध्ये खकारस्य द्वितीयत्वात्सिंहस्य द्वौ वर्णौ ।

यवर्गमध्ये रकारस्य द्वितीयत्वात्कन्याया द्वौ वर्णौ ।

यवर्गमध्ये शकारस्य पंचमत्वात्पंचसंख्याकास्तुलाराशेर्वर्णाः ।

टवर्गमध्ये णकारस्य पंचमत्वात्पंचाक्षराणि वृश्चिकस्य ।

यवर्गमध्ये शकारस्य पंचमत्वात्पंचाक्षराणि धनुषः ।

पवर्गमध्ये मकारस्य पंचमत्वात्पंचाक्षराणि मकरराशेः ।

यवर्गमध्ये शकारस्य पंचमत्वात्पंचवर्णाः कुंभस्य ।

पवर्गमध्ये भकारस्य चतुर्थत्वान्मीनराशेश्चत्वारोऽर्णाः ।

इति क्रमेण मेषादिराशीनां वर्णा ज्ञातव्याः ।

"कन्यायां शादयः स्मृताः" इत्युक्तत्वात्

शषसहळक्षाः कन्याराशेर्विशेषाश्च ज्ञेयाः ॥

एवं सूक्ष्मदृष्ट्या विचारिते श्लोकार्थः संगच्छते

"वालं गौरं खुरं शोणं शमिशोभी—" इत्यत्र

आकारानुस्वार, औकारानुस्वार, उकारानुस्वार, ओकारानुस्वार, अ-इ-ओ-आः, क्रमेणोच्चारणार्थाः ।

श्रीयुतपंडितेंद्ररामचंद्रसोमयाजिविरचिते 'समरसारे' पूर्वप्रदर्शित-श्लोकोक्तसंज्ञानुसारिणी किंचिद्भेदवती दरीदृश्यते संज्ञा। प्रसंग-वशात् विद्वज्जनमनोरंजनार्थमत्र लिख्यते समरसारस्य श्लोकः—

शं५मे५गं३गा३ग३ति६स्ते६द८ह८द८धि९ तदधः सर्गषंढान्वि-नाऽचः। काद्याख्यालीष्वृतेङं ञमपि सुभटयोर्नामवर्णोत्थसंख्ये॥

खा२प्ते शेषेऽप्यशेषे विजयपरिभवौ दा८प्तिशेषे न०व४स्ते६, मा-५सा७ली३का१रि२जेता क्रमत इह मतोऽग्र्याग्र्य इत्युक्तमाद्यैः॥

अस्मिन् श्लोके वर्णपरत्वेन संख्याज्ञानार्थं सुगमप्रकारेण यथामति विचार्यते। तत्रतावत् निम्नलिखितं चक्रं ग्रंथकृता स्वकृत "करणचिं-तामणौ" प्रदर्शितम्—

| ककारादिनव | टादिनव | पादिपंच | याद्यष्टौ |
|---|---|---|---|
| क १ | ट १ | प १ | य १ |
| ख २ | ठ २ | फ २ | र २ |
| ग ३ | ड ३ | ब ३ | ल ३ |
| घ ४ | ढ ४ | भ ४ | व ४ |
| ङ ५ | ण ५ | म ५ | श ५ |
| च ६ | त ६ | | ष ६ |
| छ ७ | थ ७ | | स ७ |
| ज ८ | द ८ | | ह ८ |
| झ ९ | ध ९ | | |
| | न ० | | |

यादिमध्ये शकारस्य पंचमत्वात् 'शं' इत्यनेन पंचमसंख्या ज्ञातव्या। हकारस्याष्टमत्वात् 'ह' इत्यनेनाष्टौ.

पादिमध्ये मकारस्य पंचमत्वात् 'मे' इत्यनेन पंचमसंख्या।

कादिमध्ये गकारस्य तृतीयत्वात् 'गं—गा—ग—' इत्यनेन त्रिः

टादिमध्ये तकारस्य-षष्ठत्वात्, दकारस्य-अष्टमत्वात्, धकारस्य—नवमत्वात् 'ति.स्ते.' इत्यनेन षट् 'द—द' इत्यनेनाष्टौ, 'धि' इत्यनेन नव. इति संख्याविचारः।

शंमे गंगेत्यादिवर्णद्योतितान् पंचाद्यंकान् एकादश कोष्टकेषु विलिख्य तेषामंकानामधः स्वरान् "अआइईउऊएऐओऔअं" एतान् विलिखेत् कथंभूतानित्यपेक्षायां "सर्गषंढान् विनाऽचः" सर्गो विसर्गाक्षरं। "अः" इति। ऋॠऌॡ—इति षंढाक्षराणि तैर्विना इति। अच्ग्रहणेन यद्यपि अच्प्रत्याहारगता "अइउण्" इत्यादिक्रमेण वर्णा लभ्यंते तथापि "सर्गषंढान्विनाऽचः" इत्युक्तेर्लिंगाद्वर्णसमाम्नायस्थाः स्वरा अच्शब्देन विवक्षिता नो ग्राह्याः किंतु मातृकाक्रमेण ग्राह्याः॥ स्वराणामधः कादीन् वर्णान् ङकारञकाररहितत्वेनैकत्रिंशत्संख्याकान् तिसृष्वालीषु लिखेत्। अंत्याल्यंत्यकोष्टकद्वये तु लेख्यवर्णाभावाच्छून्यमवस्थापयेत्। एवं जयपराजयचक्रं सुखावबोधायात्र लिख्यते—

| वर्ण-संख्या | शं ५ | मे ५ | गं ३ | गा ३ | ग ३ | ति ६ | स्ते ६ | द ८ | द्द ८ | द ८ | धि ९ |
|---|---|---|---|---|---|---|---|---|---|---|---|
| स्वराः | अ | आ | इ | ई | उ | ऊ | ए | ऐ | ओ | औ | अं |
| ककारादि-व्यंजनानि | क | ख | ग | घ | च | छ | ज | झ | ट | ठ | ड |
| | ढ | ण | त | थ | द | ध | न | प | फ | ब | भ |
| | म | य | र | ल | व | श | ष | स | ह | ० | ० |

एतत्प्रयोजनमाह "सुभटयोर्नामवर्णोत्थसंख्ये॥ खा२से शेषेऽप्यशेषे विजयपरिभवौ" इति। सुभटौ—अन्योन्यप्रहारिणौ वीरौ।

अत्रापि सुभटग्रहणमुपलक्षणाय । वादिप्रतिवाद्यादीनामपि जयपराजयज्ञानमितो बोध्यम् । अतो ययोर्द्वयोर्जयपराजयौ जिज्ञासितौ तयोर्नाम स्वरव्यंजनानां "शंमेगंगा" इति श्लोकोक्तचक्रात् संख्यांकाः पृथग्-पृथग् स्थाप्याः ॥ "खा२से"–द्वाभ्यां भाजिते "शेषेऽप्यशेषे विजयपरिभवौ"–यन्नामसंख्या सशेषा तस्य जयः । यस्य तु निःशेषा तस्य पराजय इत्यर्थः ॥

अत्रोदाहरणं यथा—रामरावणयोर्मध्ये कस्य जयः; इति विवक्षायां राम–इति नाम्नि रकाराऽकारमकाराकाररूपत्वेन चतुरक्षरस्य ( रकारस्य ३गं, आकारस्य-मे५मकारस्य–शं५, अकारस्य–शं५ ) गं-३मे५शं५शं५ एवं सर्वांकमेलनेन जाता संख्या १८

रावण–इति नाम्नि रकाराऽकारवकाराकारणकाराकाररूपत्वेन षडक्षरस्य (रकारस्य–गं३ आकारस्य-मे५वकारस्य–ग३ अकारस्य–शं५-णकारस्य–मे५ अकारस्य–शं५ ) गं३मे५ग३शं५मे५शं५एवं सर्वांकमेलनेन जाता संख्या २६ एते संख्ये पृथग् पृथक् खा२से–द्वाभ्यां२ भाजिते उभयत्रापि शेषं० शून्यं । अत्र यद्यपि द्वे संख्ये निःशेषे तेन रामरावणयोः साम्यमायाति तथापि वक्ष्यमाणचक्रे रामस्यैव जयः ॥ प्रागुक्तसंख्ययोरेव प्रकारांतरेण जयपराजयज्ञानमाह "दा८सिशेषेन०व४स्ते६मा५सा७ली३का१रि२जेता क्रमत इह मतोऽग्र्याग्र्य इत्युक्तमाद्यैः"

प्राग्वत् द्वयोर्जयपराजयज्ञानमिष्टं तन्नामाक्षरसंख्ये पूर्वप्रदर्शितप्रकारेणाऽनीय | 'दासि८शेषे' अष्टभि८र्भक्तेन०व४स्ते६मा५सा७ली३-

१ गगनं गगनाकारं सागरः सागरोपमः ।
रामरावणयोर्युद्धं रामरावणयोरिव ॥
इति कुवलयानन्दे श्रीमदप्पय्यदीक्षितः ॥ हनुमन्नाटके चतुर्दशांके च

का१रि२संख्यांके शेषे सति क्रमतः अग्र्याग्र्योऽग्रिमाग्रिमांकतुल्य-संख्योजेता मत इत्युक्तमार्यैरिति अत्रापि रामरावणयोः पूर्वोक्तप्रकारेण साधितानामाक्षरसंख्या रामस्य१८,रावणस्य२६उभे अपि संख्ये अष्टभि-८र्भक्ते शेषावुभयत्रापि द्वौ२अत्रापि द्वयोः साम्यमेवेत्यलम्

प्रकृतमनुसरामि अआइई मेषः । उऊऋ वृषभः । ॠऌॡ मिथुनः । एऐ कर्कः । ओऔ सिंहः । अंअः शषसहळक्षकन्या । कवर्गस्तुला । चवर्गो वृश्चिकः । टवर्गो धनुः । तवर्गो मकरः । पवर्गः कुंभः । यवर्गो मीनः ।

| | | |
|---|---|---|
| उऊ ऋ वृषः / मिथुनः ॠऌॡ | मेषः अआइई | मीनः यरलव / कुंभः पफबभम |
| कर्कः एऐ | | मकरः तथदधन |
| सिंहः ओऔ / कन्या अंअः शषसहळक्ष | तुला कखगघङ | टठडढण धनुः / वृश्चिकः चछजझञ |

तेन स्वराशीनामनुकूलं मनुं भजेत्

तथाच

'स्वतारराशिकोष्ठानामनुकूलान् मनून्भजेदि'ति वचनात्

राशीनां शुद्धता ज्ञेया त्यजेच्छत्रुं मृतिं व्ययम् ।
स्वराशेर्मंत्रराश्यंतं गणनीयं विचक्षणैः ॥

यदा तु स्वराशेरज्ञानं तदा साधकनामाक्षरसंबंधिनं राशिं गृहीत्वा गणयेत् । तदुक्तं यामले—

अभावे जन्मराशीनां नामराशिं विचारयेत् । इति, साध्याद्यक्षरराश्यंतं गणयेत्साधकाक्षरादिति—रामार्चनचंद्रिकायाम् ।

तंत्रराजे च—

तेन मंत्राद्यवर्णेन नाम्ना चाद्याक्षरेण तु ।
गणयेद्यदि षष्ठं वाऽप्यष्टमं द्वादशं तु वा ।
रिपुर्मंत्राद्यवर्णस्य तेन तस्याहितं भवेत् ॥

रामार्चनचंद्रिकायाम्—

एकपंचनवबांधवाः स्मृता
द्वौ च षट् च दशमास्तु सेवकाः ।
वह्निरुद्रमुनयस्तु पोषकाः
द्वादशाष्टचतुरस्तु घातकाः ॥

इति विष्णुविषयम् । शक्त्यादौ तु षष्ठं वर्जनीयम् । षष्ठाष्टमद्वादशानि वर्जनीयानीति वचनात् ।

लग्नं धनं भ्रातृबंधुपुत्रशत्रुकलत्रकाः ।
मरणं धर्मकर्मायव्यया द्वादशराशयः ॥
वैष्णवे तु "शत्रु"स्थाने "बंधु" इति पाठः ।

आगमकल्पद्रुमे—

सूत्रद्वयं पूर्वपरायतं च ।
तन्मध्यतो याम्यकुबेरभेदात्
एकैकमीशाननिशाचरे तु
हुताशवाय्वोर्विलिखेत्ततोऽर्णान्
वेदाग्निवह्नियुगलश्रवणाक्षिसंख्यान् । १
पञ्चेषुबाणशरपंचचतुष्टयांतान्
मेषादितः प्रविलिखेत्सकलाँस्तु वर्णान्
कन्यागतान् प्रविलिखेदवशेषवर्णान् । २

इति राशिचक्रम् ।

## अथ नक्षत्रचक्रविचारः ।

अआ—अश्विनी—देवगणः
इ—भरणी—मानुषः
ई उ ऊ—कृत्तिका—राक्षसः
ऋ ॠ ऌ ॡ—रोहिणी—मानुषः
ए—मृगशिराः—देवः
ऐ—आर्द्रा—मानुषः
ओ औ—पुनर्वसू—देवः
क—पुष्यं—देवः
ख ग—आश्लेषा—राक्षसः
घङ—मघा—राक्षसः
च—पूर्वाफाल्गुनी—मानुषः
छ ज—उत्तराफाल्गुनी—मानुषः

झ ञ—हस्तो—देवः

ट ठ—चित्रा—राक्षसः

ड—स्वाती—देवः

ढ ण—विशाखा—राक्षसः

त थ द—अनुराधा—देवः

ध—ज्येष्ठा—राक्षसः

न प फ—मूलं—राक्षसः

ब—पूर्वाषाढा—मानुषः

भ—उत्तराषाढा—मानुषः

म—श्रवणं—देवः

य र—धनिष्ठा—राक्षसः

ल—शतभिषा—राक्षसः

व श—पूर्वाभाद्रपदा—मानुषः

ष स ह—उत्तराभाद्रपदा—मानुषः

अं अः ळ क्ष—रेवती—देवः

## पिंगलामते (तंत्रे)।

उत्तरादक्षिणाग्रास्तु रेखाः कुर्याच्चतुष्टयम् ।
दश रेखाः पश्चिमाग्राः कर्तव्या वरवर्णिनि ॥ १ ॥

अश्विन्यादिक्रमेणैव विलिखेत्तारकाः पुनः ।
अकारादिक्षकारान्तान् कोष्टे वर्णान् लिखेत्क्रमात् ॥ २ ॥

पक्षैकत्र्यब्धिरूपावनिभुजशशियुग्युग्मभूयुग्मपक्षाः ।
युग्मैकद्वित्रिरूपत्र्यवनिशशिशशिद्व्येकपक्षाग्निवेदाः ॥ ३ ॥

तथाच निबंधे—

पूर्वोत्तरात्रयं चैव भरण्यार्द्राथरोहिणी ।
इमानि मानुषाण्याहुर्नक्षत्राणि मनीषिणः ॥ १ ॥
ज्येष्ठाशतभिषङ्मूलधनिष्ठाऽश्लेषकृत्तिकाः ।
चित्रामघाविशाखाः स्युस्तारा राक्षसदेवताः ॥ २ ॥
अश्विनी रेवती स्वाती पुष्यं हस्तः पुनर्वसू ।
अनुराधामृगशिरः श्रवणं देवतारकाः ॥ ३ ॥

तथाच ग्रंथांतरे—

स्वजातौ परमा प्रीतिर्मध्यं मानुषजातिषु ।
राक्षसे मानुषे मृत्युर्वैरं दानवदेवयोः ॥

शारदायाम्—

*प्रोपलोभांत्यंदुःप्राज्यं रुद्रस्यात्रेरुरुकेरम् ॥
लोकेलोपपंदुःप्रापखेलौवे भेषु† भेदिताः ।
वर्णाः क्रमात् स्वरांत्यौ तु रेवत्यंतगतौ तदा ।
जन्मसंपद्विपत्क्षेमप्रत्यरिः साधको बुधः ॥
मैत्रं परममैत्रं च जन्मादीनि पुनः पुनः
जन्मतृतीयपंचसप्तमानि वर्जनीयानि नक्षत्राणि

तथाच

रसाष्टनवभद्राणि युगयुग्मसमान्यपि
इतराणि न भद्राणि ..............
इत्यादि स्वनक्षत्रादेव गणनीयम् ।

* पूर्वप्रदर्शितरीत्याऽस्य श्लोकस्यार्थो विज्ञेयः । † नक्षत्रेष्वित्यर्थः ।

स्वनक्षत्राज्ञाने यामले विशेषः—

जन्मर्क्षाणामभावे तु स्वनामर्क्षाद्विचारयेत्

गणनीयप्रकारमाह—

प्रादक्षिण्येन गणयेत्साधकाद्यक्षरात्सुधीः ।
प्राकटं यस्य जन्मर्क्षं तस्य जन्मर्क्षतो भवेत् ।
प्रनष्टं जन्मभं यस्य तस्य नामर्क्षतो भवेत् ॥

## अथ नक्षत्रचक्रम् ।

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| अश्वि- | भर. | कृत्ति. | रोहि- | मृ. शी. | आर्द्रा | पुन. | पुष्यं | आ-श्ले. |
| अआ | इ | ईउऊ | ऋॠ ऌॡ | ए | ऐ | ओऔ | क | खग. |
| देवगणः | मनु. | राक्ष-सः | मनु- | देव० | मनु० | देव. | देव. | राक्ष. |
| मघा. | पू.फा | उ. फा. | हस्तः | चित्रा | स्वाती | विशा. | अनु. | ज्येष्ठा |
| घङ | च | छज | झञ | टठ | ड | ढण | तथद | ध |
| राक्ष. | मनु. | मनु. | देव- | राक्ष. | देव० | राक्ष. | देव. | राक्ष. |
| मूलं | पू.षा. | उ. षा. | श्रव. | धनि. | शत. | पू. भा. | उ.भा | रेव-ती |
| नपफ | ब | भ. | म | यर | ल | वश | षसह | ळक्ष अंअः |
| राक्ष. | मनु. | मनु. | देव. | राक्ष. | राक्ष. | मनु. | मनु. | देवः |

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| १ जन्म | २ संपत् | ३ विपत् | ४ क्षेम | ५ प्रत्यरिः | ६ साधकः | ७ वधः | ८ मैत्रं | ९ परम-मैत्रं |
| ने. | श्रे. | ने | श्रे. | ने. | श्रे. | ने. | श्रे. | श्रे. |

इति नक्षत्रचक्रविचारः ।

## अकथहचक्रविचारः ।

चतुरस्रं लिखेत् कोष्टं चतुष्कोष्टसमन्वितम् ।
पुनश्चतुष्कं तत्रापि लिखेद् धीमान् क्रमेण तु ॥
इति विश्वसारवचनात् ।

अन्यत्रापि—

चतुरस्रे लिखेद्वर्णान् चतुष्कोष्टसमन्विते—इति
चतुष्कोष्टे—षोडशकोष्टे—इति यावत्

तत्र षोडशकोष्टेऽकारादिवर्णान् प्रादक्षिण्येन लिखेत्

[1]इंद्व[3]ग्नि[11]रुद्र[9]नव[2]नेत्र[4]युगाऽ[12]र्क[10]दिक्षु
[6]ऋत्व[8]ष्ट[16]षोडश[14]चतुर्दश[5]भौतिकेषु ।
[7]पाताल[15]पंचदशवह्नि[13]हिमांशुकोष्टे
वर्णान् लिखेत् लिपिभवान् क्रमतस्तु धीमान् ॥ १ ॥

लिपिभवान् वर्णान्—अकारादीन्—इत्यर्थः । शेषं—स्पष्टं ।

नामाद्यक्षरमारभ्य यावन्मंत्रादिमाक्षरम् ।
चतुर्भिः कोष्टैरेकैकमिति कोष्टचतुष्टयम् ॥ २ ॥

पुनः कोष्टगकोष्टेषु सव्यतो नाम्न आदितः सव्यतः दक्षिणतः ।

## तथाच विश्वसारे (पिंगलामते) ।

दक्षिणावर्तयोगेन कोष्टे वर्णान् समं लिखेत् ।
येनैव लिखनं कुर्यात्तेनैव गणनं स्मृतम् ॥
सिद्धः साध्यः सुसिद्धोऽरिः क्रमात् ज्ञेया विचक्षणैः ।
सिद्धः सिध्यति कालेन साध्यस्तु जपहोमतः ॥

सुसिद्धो ग्रहमात्रेण अरिर्मूलान्निकृंतति ।
सिद्धार्णा बांधवाः प्रोक्ताः साध्यार्णाः सेवकाः स्मृताः ॥
सुसिद्धाः पोषका ज्ञेयाः शत्रवो घातकाः स्मृताः ।
जपेन बंधुः सिद्धः स्यात् सेवकोऽधिकसेवया ॥
पुष्णाति पोषकोऽभीष्टं घातको नाशयेद् ध्रुवम् ।
सिद्धः सिद्धो यथोक्तेन द्विगुणात्सिद्धसाध्यकः ॥
सिद्धः सुसिद्धोऽर्धजपात् सिद्धारिर्हंति बांधवान् ।
साध्यसिद्धो द्विगुणकः साध्यसाध्यो निरर्थकः ॥
साध्यः सुसिद्धोऽर्धजपात् साध्यारिर्हंति गोत्रजान् ।
सुसिद्धः सिद्धोऽर्धजपात् तत्साध्यो द्विगुणाधिकात् ॥
तत्सुसिद्धो ग्रहादेव सुसिद्धारिः स्वगोत्रकम् ।
अरिसिद्धः सुतान् हन्यादरिसाध्यः सुकन्यकाः ॥
तत्सुसिद्धस्तु पत्नीघ्नस्तदरिर्हंति साधकम् ॥

पिंगलायां विशेषः ।

एषु दोषेषु सर्वत्र मायां काममथापि वा ।
क्षिप्त्वा चादौ श्रियं दद्यात् तद्दूषणविमुक्तये ॥

---

## सुबोधार्थं चक्रं लिख्यते ।

| प्रथमचतुष्कं | | द्वितीयचतुष्कं | |
|---|---|---|---|
| सिद्ध–सिद्धः बांधवः अकथह १ | सिद्ध–साध्यः उङप २ | साध्य–सिद्धः सेवकः आखदळ–क्ष ३ | साध्य–साध्यः ऊचफ ४ |
| सिद्ध–अरिः ओडव ५ | सिद्धः–सुसिद्धः लृझम ६ | साध्य–अरिः औढश ७ | साध्य-सुसिद्धः लॄञय ८ |
| अरि–सिद्धः घातकः ईघन ९ | अरि–साध्यः ऋजभ १० | सुसिद्ध–सिद्धः पोषकः इगधः ११ | सुसिद्ध-साध्यः ॠछब १२ |
| अरिः–अरिः अःतस १३ | अरिः–सुसिद्धः ऐठल १४ | सुसिद्ध–अरिः अंणष १५ | सुसिद्ध–सुसिद्धः एटर १६ |
| चतुर्थचतुष्कं | | तृतीयचतुष्कं | |

यस्मिन् चतुष्के साधकनामाद्यक्षरं तिष्ठति तदारभ्य यस्मिन् मंत्राद्यक्षरं तिष्ठति तदवधि गणयित्वा सिद्धसाध्यसुसिद्धादीन् विचारयेत् साधकमंत्राद्यक्षरयोरेककोष्ठस्थितिश्चेद्भवति तदा स मंत्रः सिद्धसिद्धः । द्वितीये सिद्धसाध्यः । तृतीये चेत्सिद्धसुसिद्धः । चतुर्थे चेत्सिद्धारिः । एवं ततः प्रादक्षिण्यप्राप्तद्वितीयचतुष्केचेत्तत्समकोष्ठे मंत्राद्यक्षरं तिष्ठति तदा स मंत्रः साध्यसिद्धः । द्वितीये चेत्साध्यसाध्यः । तृतीये चेत्साध्यसुसिद्धः । चतुर्थे साध्यारिः ॥

एवं तृतीयचतुष्के चेत्सुसिद्धः सिद्धः । द्वितीये सुसिद्धः साध्यः । तृतीये सुसिद्धः सुसिद्धः । चतुर्थे सुसिद्धारिः । एवं चतुर्थचतुष्केऽपि प्रथमं अरिसिद्धः । द्वितीये अरिसाध्यः । तृतीये अरिसुसिद्धः । चतुर्थे अरि–अरिः ।

इति सम्यग्गुरुमुखाद्विज्ञाय मंत्रमेलनं कार्यम् ।

इति अकथहचक्रविचारः ।

## अकडमचक्रविचारः ।

रेखाद्वयं पूर्वपरेण कुर्यात्
तन्मध्यतो याम्यकुबेरभेदात् ।
महेशरक्षोधिपतिक्रमेण
तिर्यक् तथा वायुहुताशनेन ॥
अकारादिक्षकारांतान् क्लीबहीनाल्लिखेत्ततः[1] ।
एकैकक्रमतो लेख्यान् मेषादिषु झषांतकान् ॥
गणयेत्क्रमशो भद्रे ! नामादिवर्णकादिकान् ।
मेषादितश्च मीनांतं गणयेत्क्रमशः सुधीः ॥
सिद्धसाध्यसुसिद्धारीन् पुनः सिद्धादयः पुनः ।
नवैकपंचमे सिद्धः साध्यः षड्दश युग्मके ॥
सुसिद्धस्त्र्यद्रिके रुद्रे वेदाष्टद्वादशेऽरिपुः ।
एतच्चे कथितं देवि चक्रमकडमाभिधम् ॥

अन्यच्च

देशे दुर्गे पुरे ग्रामे मंत्रे देवे तथौषधे ।
स्वामिभूमिस्वभृत्येषु रिपुमूलानि शोधयेत् ॥

---

१ ऋ ॠ ऌ ॡ–एते क्लीबाः ।

स्वनामाक्षरमारभ्य यावन्मंत्रनिदर्शनम् ।
प्रदक्षिणक्रमेणैव मंत्राद्यं शोधयेद्बुधः ।
सिद्धः सिध्यति कालेन साध्यस्तु जपहोमतः ।
सुसिद्धो ग्रहणादेव रिपुर्मूलं निकृंतति ॥

इदं तु गोपालविषयकमेव । "गोपालेऽकडमंस्मृतं" इति वचनात् ।

## अथ स्पष्टार्थचक्रम् ।

| | | | | |
|---|---|---|---|---|
| ई. | | पू. | | अ. |
| | अःठभ १२ मी.<br>कुं. अंटवक्ष ११ | अकडम १ मे. | आखढय २ वृ.<br>इगणर ३ मि. | |
| उ. | औञफळ १० म. | | ईघतल ४ कर्कः | द. |
| | ओझपह ९ ध.<br>८ वृ. ऐजनस | एछधष ७ तु. | उङथव ५ सिंह<br>६ कन्या ऊचदश | |
| वा. | | प. | | नै. |

| सिद्धः | साध्यः | सुसिद्धः | रिपुः |
|---|---|---|---|
| १ | २ | ३ | ४ |
| ५ | ६ | ७ | ८ |
| ९ | १० | ११ | १२ |

इति अकडमचक्रविचारः ।

## अथ ऋणिधनिचक्रविचारः ।

मंत्रसाधकयोः कथं ऋणाऋणीभाव इति पार्वती शंकरमपृच्छत् तदुक्तं तंत्रराजे—पार्वत्युवाच ।

कथं ऋणित्वं मंत्राणां साधकानां च मे वद । श्रीशिव उवाच ।

पूर्वजन्मकृताभ्यासात् पापादस्याफलाप्तिकृत् ।
पापे नष्टे फलावाप्तिः काले देहक्षयादृणी ॥
मंत्रसंप्राप्तिमात्रेण प्राक्तनं सिद्धये भवेत् ।
सिद्धमंत्रो गुरोर्लब्धमंत्रो यः सिद्धिभाग् नरः ॥
लक्ष्मीमदादनादृत्य मंत्रभोगमवाप्नुयात् ।
स मंत्रस्य ऋणी ज्ञेयो भजनं तस्य पूर्वकम् ॥
तस्मादृणविशुद्धिस्तु कार्या सर्वैस्तु सर्वशः ।

अन्यच्च

कोष्टान्येकादशान्येव वेदेन पूरितानि च ।
अकारादिक्षकारांतं लिखेत् कोष्टेषु तत्त्ववित् ॥
प्रथमं पंचकोष्टेषु ह्रस्वदीर्घक्रमेण तु ।
द्वयं द्वयं लिखेत्तत्र विचारेणानुसाधकः ॥
शेषेष्वेकैकशो वर्णान् क्रमशस्तु लिखेत्सुधीः ।
षट् कालैकालैवियंदग्निसमुद्रवेदै—

खांकाशंशून्यंदहनाः खलु साध्यवर्णाः ।

युग्मेंद्विपंचखंद्वयं नयेनं शशांक—

व्योमाब्धिवेदशशिनः खलु साधकार्णाः ॥

नामाक्षरादकथहात्गजभक्तशेषं ।

ज्ञात्वोभयोरधिकशेषमृणं धनं स्यात् ॥

अस्यार्थः—साध्यवर्णान् स्वरव्यंजनरूपेण पृथक्कृतान् षट्कालाद्यंकैर्गुणितान् कृत्वा तथा साधकनामाक्षरान् स्वरव्यंजनरूपेण पृथक्कृतान् युग्माद्यंकैर्गुणयित्वाऽष्ट८संख्याभिर्हृत्वा उभयोः साध्यसाधकयोर्मध्येऽधिकं शेषं ऋणं । शेषं न्यूनं धनं ज्ञात्वा मंत्रं दद्यात् । यदा मंत्रश्चेदृणी तदा शुभदायको भवति । धनी चेन्न । तथा ग्रंथांतरे—

इंद्रर्क्षनेत्ररविपंचदशर्तुवेद—

वन्हद्यायुर्धाष्टनवेभिर्गुणितांश्च साध्यान् ।

दिग्भूगिरिश्रुतिगजाग्निमुनीषुवेद

षट्वह्निभिश्च गुणितानथ साधकार्णान् ॥

नामाज्झलादित्यादिवचनं तु विष्णुविषयं रामार्चनचंद्रिकायां धृतत्वादिति केचित् । वस्तुतस्तु पूर्वस्यैव विवरणमेतत् । इति नित्योत्सवे सप्तमतरंगे

यद्वा

साध्यांकान् साधकांकाँश्च पूरयेद् गृहसंख्यया ।

गुणितेऽष्टहृतेऽकानां यच्छेषं जायते स्फुटम् ॥

तदंकं कथयाम्यत्र एकादशगृहे स्थितम् ।

---

१ "युग्माद्विपंचवियदंबरयुक् शशांक" इ. पाठः ।

# अथ ऋणिधनिचक्रम् ।

| | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| १४ | २७ | २ | १२ | १५ | ६ | ४ | ३ | ८ | ८ | ९ | साध्यांकाः मतांतरे |
| ६ | ६ | ६ | ० | ३ | ४ | ४ | ० | ० | ० | ३ | |
| अआ | इई | उऊ | ऋॠ | लृॡ | ए | ऐ | ओ | औ | अं | अः | |
| क | ख | ग | घ | ङ | च | छ | ज | झ | ञ | ट | |
| ठ | ड | ढ | ण | त | थ | द | ध | न | प | फ | |
| ब | भ | म | य | र | ल | व | श | ष | स | ह | |
| २ | २ | ५ | ० | ० | २ | १ | ० | ४ | ४ | १ | साधकांकाः |
| १० | १ | ७ | ४ | ८ | ३ | ७ | ५ | ४ | ६ | ३ | मतांतरे |

तथा

नामाद्यक्षरमारभ्य यावन्मंत्रादिमं भवेत् ।
त्रिधा कृत्वा स्वैर्भिन्नं तदन्यद्विपरीतकम् ॥

अस्यार्थः—साधकनामाद्यक्षरतो गणयेद्यावन्मंत्रादिमाक्षरम् । तत्संख्यं च त्रिधा कृत्वा सप्तसंख्याभिर्हृत्वाऽधिकं ऋणं शेषं धनं भवेत् ।

तदन्यदिति ।

मंत्राक्षरं समारभ्य यावत्साध्याक्षरम् भवेत् ।
तावत्सप्तगुणं कृत्वा त्रिभिर्भागं समाहरेत् ॥

अन्यच्च—

साध्यनाम द्विगुणितं साधकेन समन्वितम् ।
अष्टभिश्च हरेच्छेषं तदन्यद्विपरीतकम् ॥

अस्यार्थः—साध्यनाम स्वरव्यंजनभेदेन द्विगुणीकृत्य साधकनाम्ना स्वरव्यंजनभेदेन संयोज्य अष्टभिर्हृत्वा अधिकं ऋणं शेषं धनमिति ।

साधकनामाक्षरं स्वरव्यंजनभेदेन द्विगुणीकृत्य साध्येन युतं कृत्वाऽष्टभिर्हरेत् । इति साध्यनिर्णयस्तंत्रांतरे—

मंत्रो यस्याधिकांकः स्यात्तदा मंत्रं जपेत्सुधीः ।
समेऽपि च जपेन्मंत्रं न जपेत्साधकाधिके ॥

शून्ये मृत्युं विजानीयात्तस्माच्छून्यं विवर्जयेत् ।
वाराहीसंहितायां पुरश्चर्यार्णवे प्रथमतरंगे दीक्षाविचारे
ताराचक्रं राशिचक्रं नामचक्रं तथैवच ।
अत्र तेषु गुरोर्मंत्रो नान्यच्चक्रे विचारयेत् ॥

तंत्रराजे—

एकद्वित्रिचतुःपंचवर्षाण्यालोच्य योग्यताम् ।
भक्तियुक्तान् गुणाँश्चापि क्रमाद्वर्णेषु संकरे ॥

तंत्रराजटीकायाम्—

ऋणसिद्धादियोगेषु मंत्रदाने विशेषतः ।
प्रसिद्धं नाम गृह्णीयात्प्रसिद्धो येन जाग्रति ॥

यामले—

कालिकायाश्च तारायास्ताराचक्रं शुभं भवेत् ।
वैष्णवे राशिशुद्धिः स्याच्छैवे चाकथहः स्मृतः ॥

अकडमो वामने च························ ।
धनिमंत्रं न गृह्णीयाद······················ ॥

वाराहीतंत्रे—पुरश्चर्यार्णवे प्रथमतरंगे दीक्षाविचारे, भुवनेश्वरीतंत्रे

---

१ पाठांतरः 'अत्र चेत्सगुणो मंत्रो' ॥

ताराशुद्धिर्वैष्णवानां कोष्ठशुद्धिः शिवस्य च ।
राशिशुद्धिस्त्रैपुरे च गोपालेऽकडमः स्मृतः ॥
कोष्ठशुद्धिर्वराहे च महालक्ष्म्याः कुलाकुले ।
नामादिचक्रे सर्वेषां भूतचक्रे तथैवच ॥
दोषान् संशोध्य गृह्णीयाद् गुरुवाक्येन जल्पकः ॥

अस्यापवादो मंत्रमहोदधौ—

यत्र यस्य भवेद्भक्तिर्विशेषः स मनूत्तमः ।
वैरिकोष्ठमपि प्रोक्तोऽभीष्टदस्तस्य जायते इत्यलम् ॥

